# दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला

या च

दयानन्दब्राह्ममहाविद्यालयीयाचार्यपदप्रतिष्ठितपूर्वेण दयानन्दमहाविद्या-
लयीयानुसन्धानालये विश्वेश्वरानन्दानुसन्धानालये चाध्यक्ष-
पदाधिकारिणा एम० ए०, एम० ओ० एल०

इत्युपाधिधारिणा

**विश्वबन्धुशास्त्रिणा**

बहुभिर्विद्वद्भिः सङ्गत्य

सम्पादिता

तस्यां चायं

**षोडशो ग्रन्थः**

लवपुरम्

( १९९२ वि० )

# THE D. A.-V. COLLEGE SANSKRIT SERIES.

Edited
in conjunction with other scholars

BY

**VISHVA-BANDHU SHASTRI**, M.A., M.O.L.,

Director, D. A.-V. College Research Deptt. and
Vishveshvarananda Research Institute; formerly,
Principal, Dayananda Brahma Mahavidyalaya.

Volume Sixteen.

LAHORE

1935.



# श्रयङ्कम् ।

## प्रथमः सर्गः ।

### अमृतसरोवर्णनम् ।

श्रीमन्नानकमङ्गदं ह्यमरदासं रामदासार्जुनौ
गोविन्दं हरिपूर्वकं हरि च रायं श्रीहरिकृष्णकम् ।
तेगादिं च बहादरं नमत भो गोविन्दसिंहं भुवि
जातान् भक्तहितान् महोदययुतान् खक्ष्मावतारान् कलौ ॥१॥
पुण्यस्थानविशेषकारणतया श्रीरामदासेन यद्
ज्ञातं सन्निरमायि सेवकजनस्वान्तैकशुद्धिप्रदम् ।
तीर्थं दर्शनतः पुमर्थमखिलं सेवानुरूपं दद-
न्नाम्ना ख्यातमिहामृतं सर इति प्रोत्फुल्लपुण्याम्बुजम् ॥ २ ॥
यत्तीरे प्रमुखं स्थलं विजयतेऽकालैकनिष्ठावतां
नित्यं कीर्त्तनरागपुस्तकवचो गोविन्दचर्चायुतम् ।
निःश्यानं जलदैकलेखनपरं यत्रोत्तरे दिक्तटे
पूर्वे कल्पमहीरुहोपवनकं यत्साधुसङ्गान्वितम् ॥ ३ ॥
यद्दक्षे रणशूरयोधसमुदायस्थानशोभावहं
तारासिंहसुजानसिंहवसतिश्रीतीर्थभूषायुतम् । -

यद्भूमाहमपद्मनन्दुशरदाभास्वच्छकीर्तिः स्थिरा
सोपानं मणिकुट्टिमोज्ज्वलचमत्कारैकशोभाकरम् ॥ ४ ॥
वेदीतानिशहीदनागविमलाकालीयमल्लान्पजेः (?)
पत्रैरष्टभिरन्वितं सरसिजं श्रीमत्सुधाख्यं सरः ।
मध्ये कर्णिकमुज्ज्वलं विजयते सद्ग्रन्थजीशोभितम्
श्रीमन्नानकरामदासगुरुगोविन्दप्रतिष्ठापितम् ॥ ५ ॥
जस्सासिंहसुभागसिंहजयसिंहाकालसिंहः स्फुरन्
भण्डासिंहगुलाबसिंहकरूकीर्त्सिंहवाघेश्वरः ।
तारासिंहखुशालसिंहकबघेलासिंहसप्रेमसिंहः
सिंहा गुरुवषश एष चढतः सिंहो महासिंहयुक्ः ॥ ६ ॥
एष्वेवामरसिंह इत्थममलैः पत्रैः परीवारयुक्
षड्भूसंख्यकया युतैर्बहिरितो दिक्कोणगैर्दैवतैः ।
पूजायंत्रमिवेश्वरं सुकलितं वामेचणासुन्दरम्
लोके वै कलिकालभीतिहरणं सद्भक्तिसेवावताम् ॥ ७ ॥
यन्नीरं सुविलोकितं बहुजनुःकालुष्यहृत् पुण्यदं
स्पृष्टं चित्तविशोधनं निजमतेः स्वच्छत्वसत्त्वप्रदम् ।
स्नातं मुक्तिकरं स्वचित्तवशतः कल्पद्रुमाभं शुभम्
दूराद्ध्यातमपीष्टपौरुषगणं सत्सेवकेभ्यो ददत् ॥ ८ ॥
यद्भित्तिस्थमणिप्रवेकरचनां त्वष्टुः शिरः कम्पते
दृष्ट्वा स्वर्णनिषक्तहीरकसितां सभ्रान्तचित्तस्य हि ।
चित्रे कल्पतरुर्मिषाभिवसतीन्द्रप्रेषितः सेवितुं
दीपव्याजतया कृशानुरनिशं यं सेवते ऽत्यादरात् ॥ ९ ॥
यत्रज्ञातिवरांश्चतुर्दशकुरिच्छादीन्स्वके वासयद्-
ग्रामेऽन्विष्य पुरान् व्यवसितानब्धीन्दुसंख्यावताम् ।

लोकानां गिपतश्चतुर्धरतया कृत्वा स्थिरान् स्वात्मनो
ज्ञातान् लोमनया गुरुः परमविच्छ्रीरामदासः प्रभुः ॥ १० ॥

गङ्गाद्वारसमं समस्तभुवनस्थानं चतुर्भिर्युतं
द्वारैः पूर्वयमाम्बुपोत्तरगतैः सन्तोषशीलान्वितैः ।
श्रीमद्भक्तिदयादिसाधनयुतैः सोपानपङ्क्त्युज्ज्वलैः
स्वर्गं द्वारमिवामरावतिकया पुर्या समालिङ्गितम् ॥ ११ ॥

तेषां ब्रह्म सनातनं सुविमलं शुद्धं सुसूक्ष्मं परं
तन्मत्वेत्र विभात्यपीह रहिताः शान्त्यादिभिः साधनैः ।
ये नित्यं कलिकालमध्यजनिनामस्तत्कीर्त्तने तत्परा
दानाधीतिशुभेष्टिपूर्त्तरहिता अप्यत्र वासादृताः ॥ १२ ॥

तुम्बीवेणुमृदङ्गझर्झरझणज्झाङ्कारवीणारवैः
संयुक्ता निपुणाः कवित्वकरणे ये गानरक्ताः सदा ।
धुम्राश्चारणसूतमागधवरा ग्रन्थाग्रतो गानतः
पूज्यत्वं गमिता अहोऽतिमहिमा कस्तं न सेवेत् सुधीः ॥१३॥
स्त्रीहूणान्ध्रपुलिन्दभीवरनटम्लेच्छादयो जातितो
नीचा अप्यनुरागभक्तिवशतः सिद्धिर्द्धयीं प्रापिताः ।
हे सन्तः शृणुत प्रभोर्गुणगणग्रामं सदा गायत
वेदान्तोपनिषत्पुराणपठितं श्रीनानकाद्यैः पुनः ॥ १४ ॥

एषा श्लोकचतुर्दशीविरचिता गोविन्दसिंहाग्रतः
कृत्वोपायनमेतदेव विदुषा कौरेण संरक्षिता ।
भारद्वाजसगोत्रझिङ्गणकुले जातेन सम्प्रेरिते-
नोमादेवतया हृदिस्थपदया सुप्रीतया मानसे ॥ १५ ॥

श्रीरामादिकदासबीसुहृदयाभिप्रायमेवं मया

संलक्ष्य श्रुतिभूमि*मात्रकमिता ज्ञेयेन्थकं पण्डितैः ।
एषा पञ्चदशी सदा भगवती ह्यर्वर्त्ति सर्वोपरि
मीमांसादिकमत्र धर्मसहितं विद्यास्थलं भासते ॥ १६ ॥

इति श्रीकृष्णकौरमिश्र कृते श्रथक्कं काव्ये अमृत-
सरोवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

---

# द्वितीयः सर्गः ।

## रामदासपुरवर्णनम् ।

यत्पूर्वे खलु पाशनाशनविधौ दक्षा विपाशा नदी
यस्यैरावतिका लवाभिधपुरीभूषा नदी पश्चिमे ।
यद्दक्षे तरणान्ततारणतलं कुष्ठादिरुङ्नाशनं
कौबेर्य्यां शुभदेविकासुरनदीतुल्या महैनोपहा ॥ १ ॥

यत्पार्श्वे ननु रामदासनगरं तन्नामतः शोभितं
यत्सामन्ततया विभान्त्यवसथा भूपैः कृताः सर्वतः ।
आदौ रामगढो हरीहरिपुरं झण्डापुरं लोहपू-
र्बोधेशोलहणेशगुज्जरपुरं शोभेशपू राजितम् ॥ २ ॥

जयसिंहहकीकतभागपुरं
चढतार्धमृगाधिपकर्मपुरम् ।
श्रुतिभूमिपुरीपरिवारयुतं
विजयेत सदा शुभलोकधरम् ॥३॥

सालोधर्मदयालुकाद्गुनयुता शाहीदुर्गीयादिका
धर्मस्थापनशालिका अतिथिलोकाभ्यागतानां हिताः ।

---

* पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्याया धर्मस्य च चतुर्दश ॥

ईदृश्यो बहवो विभान्ति खलु वस्तीगममङ्गाविना
यस्मिन् वै सुथरेप्रभृत्यवधूताः सर्वा जगद्रक्षकाः ॥४॥
श्रीनारायणकल्पितं मृतिजिनो लिङ्गं शिवोपासिनां
हार्दान्धत्वहरं सुशीतलकरं श्रीशीतलामन्दिरम् ।
यस्मिन् दुर्गतडागमन्दिरवृतं लालालयालङ्कृतं
पुंस्त्रीबालकपामरादिषु फलं सेवानुरूपं ददत् ॥५॥
यस्मिन् पश्चसरोऽस्ति मुख्यममृतं तद्वद्विवेकं सरः
सन्तोषं कमलाभिधं तदपरं रामाभिधानं सरः ।
सालोद्दुण्डकलक्ष्मणाप्रियतमश्रीपश्चतीर्थीलखा-
भाईत्यादिककल्पितानि बहुशस्तीर्थानि भान्ति क्षितौ ॥६॥
नित्यं भाति सुदर्शनीयममलं सद्गोपुरं राजते
ह्यट्टालादिगणं विमानसदृशं रथ्याशतैरन्वितम् ।
लोकानां सदनानि चित्रिततराण्यालक्ष्यचित्तं स्फुर-
न्नाकेऽपीदृशमेव देवरचितं कौतूहलं सौख्यदम् ॥७॥
वीणावादनतत्पराः क च नरागानैकसक्ताः कचित्
षड्जादिस्वरसप्तकं पृथुतया विन्यासयन्तो बलात् ।
मादङ्गध्वनिकांसतालमुरजं संस्तानयन्तो रवैः
श्रीरामस्य पदारविन्दविमलं धन्याः स्तुवन्त्यत्र हि ॥ ८ ॥
यत्र ज्ञानविरागभक्तिविमलं ग्रन्थैकसन्दर्भितं
भाषासंस्कृतिसत्कवित्वरचितं संगुप्तभावार्थकम् ।
गायन्त्येव दिवानिशं मुहुरहो ध्यानैकनिष्ठारता-
स्ते धन्याः कलिवालपाशहरणाः सन्तारयन्तो जनान् ॥ ९ ॥
मद्यद्यूतपलादिवारवनितासेवैकमूर्च्छाकुला
दुस्सङ्गे निरताः स्वजन्मविमलं सम्मोषयन्तो हठात् ।

अस्मद्द्रव्यविलासिनीहनिधन्द्रोह रताः पामरा
जन्मज्ञातिकुलाभिमानमुचितं मन्थूलयन्तः क्वचित् ॥ १० ॥
आपूर्वोत्तरदक्षवारुणदिशं विक्रेतुकामा नराः
पट्टूर्णाममहार्धिकाम्बरगणं नीलं मणीन् मौक्तिकम् ।
यत्रायान्त्यमृतं मणोऽभिलषितं लाभं समायान्ति त
इत्थं पट्टनमेतदेव रचितं सर्वोपरि भ्राजते ॥ ११ ॥
गोणीयुक्तसहस्रगोशकटचक्रैर्वन्त आयान्ति ये
गैर्गैमन्धवस्त्रतचन्दनहरिद्रापूरिताः प्रेरिताः ।
अत्रायातवणिग्जनैर्धनविवृद्धैष्मायुतैस्ते सदा
तद्द्रव्यव्यतिहारतः पुनरिमे गच्छन्ति काष्ठां स्वकाम् ॥ १२ ॥
ये पूर्वं खलु दीनतामुपगता गुर्वाश्रयात् सङ्गता
अत्रस्था महनीयभावविधृताः क्षित्यां लभन्ते जनाः ।
लक्षार्धीशपरम्परामुपसृता द्रव्यक्रयैर्विक्रयै-
र्हुण्डीलेखनतो धनाभिगमनैर्वीमाद्युपायैस्तु ते ॥ १३ ॥
नित्यं वैष्णवविप्रपूजनरताः क्षीरादिभिर्भोजनैः
द्राक्षाखण्डघृतप्लुतैश्च हवनैर्ये कौशिकीपूजकाः ।
देवाराधनरुद्रपूजनहनूमड्ढुण्ढिपूजारता-
स्ते धान्यैर्वसुभिर्भृता बहु यथा माङ्गल्ययुक्ताः सदा ॥ १४ ॥

गोधूममेदोघृतखण्डतुल्यैः
सुपाचितं चापि कटाहमध्ये ।
मिष्टान्नमेतद्धि कडाहसंज्ञं
सर्वार्थसिद्धिप्रदमेव पूज्यम् ॥ १५ ॥

शिष्याह्वानपुरःसरं करयुगं सम्मेलयित्वा पुनः
कृत्वा ग्रन्थवक्त्रः श्रुतिं च नमनं सर्वैर्मिलित्वा पुनः ।

सर्वेभ्यः प्रतिपादयन्ति ममनारीत्या प्रसादाङ्कितः
श्रीब्रह्मादिपिपीलिकान्तननवस्नुप्राप्नु यद्भोजने ॥ १६ ॥

इति श्रीकृष्णकारामिश्रकृते अथङ्क काव्ये
रामदासपुरवर्णन नाम द्वितीयः सर्गः ।

——:o:——

## तृतीयः सर्गः ।

### वसन्तऋतुहोलिकावर्णनम् ।

वज्रेशीभवने घृतप्लवनकं देव्या जनैः कार्यते
तद्वै मण्डलमाज्यकं कुसुमसन्माल्यादिपूजायुतम् ।
यद्दृष्ट्वा बहुपुण्यलाभ ऋतुषट्कं वै लभेत् सम्पदो
नानाकार्यकरं प्रसादजननं देव्या इदं भूषणम् ॥ १ ॥
माघे शुक्लशरे दिने भगवती प्रादुर्बभूवाग्रतो
लोके मङ्गलमातनोति दिवसं तत्पुण्यमुत्साहदम् ।
कृष्णेन व्रजभूषु गोपवनितायुक्तेन रासो महा-
नारब्धः श्रवणेन यस्य कलुषं नश्येद्धि तद्वर्ण्यते ॥ २ ॥
श्रीमद्रासाभिलाषी व्रजयुवतिजनो मञ्जुलर्चौ वसन्ते
तस्यादौ माघशुक्ले शुभमदनशरोद्दीपितायां तिथौ वै ।
मन्दं क्रीडां प्रचक्रे मृदुमुरजरवैर्घोषितां मण्डलीका-
मन्योन्यालापशब्दाच्चकितखगगतिं वासुदेवेन सार्धम् ॥ ३ ॥
यत्र भ्राजिष्णुचूर्णानवरतगतिभिश्छन्नभूम्यन्तरिक्षं
सन्ध्याम्भोदावलीभावदरुणरुचिभिः कौतुकं दर्शनीयम् ।
ब्रह्माद्यैः सङ्गृहीतं व्रजभुवनगतैर्गोपबालैः सुरङ्गै-
रान्दोलद्भिर्जलौघैः सुरभिरसयुतैरार्द्रिताशेषलोकम् ॥ ४ ॥

उन्फुल्लन्मषपालीवमनरुचिमनङ्गास्पदं कामनीनां
शीर्षे मपांगिपिच्छं मृगमदतिलकं पूरयन्तं सुधाभिः ।
वंशीरन्ध्रात् व्रजस्त्रीकरगतजलयन्त्रादिभिः सिच्यमानं
गायन्तं पञ्चमं रागममलमघहं ब्रह्मरूपं नतोऽस्मि ॥ ५ ॥
श्रोताभिरामशब्दैर्मुरजमुखभवैर्नर्तितः स्त्रीकदम्बो
मित्रेण ब्रह्मणानुग्रथितकुसुममालोऽपि पूज्येन देवैः ।
स्त्रीभावेनात्तगर्वस्त्वरितविरहितः स्वामिना चेन्द्रियाणां
वृन्दारण्ये सुकूले तपनदुहितृजे क्रीडितः सम्मुमोह ॥ ६ ॥
चक्षुःश्रोत्रोन्नवोचन्मम जननमभूद्भूमिरन्ध्रे धिगेतत्
स्वर्गाधीशं स्वरूपेऽप्यवतरणपरेऽनेकमन्युर्बभूव ।
भूमीसंस्थो जनोऽयं मम जनिसफलत्वं जगादेति हृष्टो
दृष्ट्वा श्रीकृष्णरामं व्रजभुविरचितं गोपिकागोपवृन्दैः ॥ ७ ॥
अस्तं याते विवस्वत्यरुणघनपटाच्छादिते शैशिरर्त्तौ
पूर्वाशां प्रोद्यतीन्दौ सजलजलदसङ्घावृते स्पष्टतारे ।
सन्ध्याकाले समीरे लघु लघु नुदति प्रेयसीं चा प्रियार्थे
कस्या नोच्छृङ्खलो वै भवति तरलितश्चित्तमातङ्गराजः ॥ ८ ॥
राधाया याहि गेहं मननविनतिभिः सान्त्वयस्व प्रियां तां
त्वद्वेशी गीतशब्दाद्विवशितधिषणायाः स्खलन्त्या गृहान्ते ।
नो चेत् क्रुद्धा भवेत् सा क्व तत्सुखततिश्चेति दूत्या स उक्तः
श्रीकृष्णः शीघ्रगामी व्रजसखिसहितः क्रीडनार्थं जगाम ॥९॥
खेलैः सञ्चरन् वै शशिमृगशिशुकः स्यन्दनाग्रे निबद्धो
गन्तुं शक्तो न चासीत् क्वणितपदरवाहूतचित्तोऽङ्गनानाम् ।
रासन्तीनां प्रियाश्लिष्टसुभगभुजलतानां लसत्पटीनां
तस्मिन् श्रोतुं प्रवृत्ते ष्ट(स ?)ति शतादिवसा यामिनी सम्बभूव ॥१०॥

काचिद्भर्त्रा निरुद्धा च्चणमपि विरहाद्दुद्भवाता वनान्तम्
गेहाद्याति स्म कृष्णस्मरणवशतया प्राप्तमिद्धयष्टका चै ।
तत्रान्दोलत्सखीभिः प्रियहृदयभुजाश्लिष्टकण्ठी मुकण्ठी
साफल्यं प्राप सेत्थं मधुरिपुमहिमा भो भजध्वं तमीशम् ॥११॥

तन्वी सुप्तप्रबुद्धा श्रुतिगतमधुरा गवमम्मीलिताची
तल्पादुत्थाय गन्तुं कृतनियतमना विस्मृतात्मीयवर्गा ।
श्वश्र्वा सम्यङ् निषिद्धा सुतललनमिषेणैव याता वनान्तं
दृष्ट्वा श्रीकृष्णचन्द्रं प्रमुदितहृदयाह्लादिनी सम्प्रवृत्ता ॥ १२ ॥

एवं लोके सुखाढ्याः सुरभिरमयुतैर्होलिकायां प्रविष्टा
भैरव्या लिङ्गगुह्यप्रकथननिरता मोहकामैकसक्ताः ।
हम्मीराद्यैः सुगन्धैः चितिजलदसमारब्धभोगैर्वृणाना
रौप्यस्वर्णारचर्मारचितभुवनयन्त्रा निषिक्ता जलौघैः ॥ १३ ॥

वेश्याभ्रूकुंशनृत्यप्रमुदितमनसः कुङ्कुमारक्तवस्त्रा-
स्ताले नृत्ये च वाद्ये बहुतरनिपुणा मद्यपानादिसक्ताः ।
गायन्तो गापयन्तो विषयविवलिता हास्यलीलानुषक्ता
जातप्रीतौ* धनानां वितरणचतुरा धुम्रभट्टादिकानाम् ॥१४॥

लोके माङ्गल्ययुक्ता शुभभवनगता मित्रवृन्दोपविष्टाः
कर्पूरोशीरसान्द्रैर्हिमजलमिलितैरम्बुयन्त्रैर्न्यषिञ्चन् ।
अन्योन्यास्येषु चूर्णैर्बहुसुभगतया मर्दयन्तो हमीरं
ढक्काभेरीमृदङ्गध्वनियुतनटनैर्नर्त्तनैर्लासयन्तः ॥ १५ ॥

पूर्वे येऽत्यन्तहीना धनरहिततया सङ्गताः श्रीगुरूणां
पादाम्भोजं निविष्टा भ्रमरगण इव प्राप्तमाधुर्यरासाः ।

---

* प्रीतौ जातायां सत्याम् ॥

ते लोके कीर्तिमन्तो धननिकरयुताः प्राप्तमाहात्म्ययोगा
दातृख्यात्येकनिष्ठा इह परभवने प्रापितानन्दपूगाः ॥ १६ ॥

इति श्रीकृष्णकीरमिश्रकृते श्रयङ्क काव्ये
वसन्तऋतुहोलिकावर्णनं नाम
सर्गस्तृतीयः समाप्तः ॥ ३ ॥

---

# चतुर्थः सर्गः ।

## ग्रीष्मादिऋतुषट्कवर्णनम् ।

ग्रीष्मर्तौ तापतप्ता अमृतसरसिगाः खेलयन्तो जलौघैः
तापान् सम्मार्जयन्तो व्यजनकुसुमवातैः सुशीतैर्बहिःष्ठाः ।
तक्रैर्दुग्धैः सितार्कैः सवनमुपगतैः सेवितैः शान्तचित्ता
धन्यास्ते सम्पदाढ्याः ममरिचविजयासेवनाद्यैः प्रसन्नाः ॥१॥
ज्येष्ठे घट्यम्बुदानैर्व्रतविधिविहितैः शर्करापानमत्ताः
देवान् पित्रादियुक्तांस्तनुहिमजलैस्तर्पयन्तः सुतृप्ताः ।
एकादश्यां फलादीन् मधुररसयुतान् भक्षयन्तः प्रदाय
द्वादश्यां विप्रसाधून् मधुरघृतपयोभोजिनः कुर्वते च ॥ २ ॥
आषाढे शरदालये वसनतो घर्मातपो वार्य्यते
नित्यं व्याकुलतामुपैति हृदयं पुंसां विना येन वै ।
तद्दुःखं भजनानुरागवशगैः किञ्चिन्न विज्ञायते
वाचा कीर्त्तनकारकैः करयुगैः सत्पादसेवादरैः ॥ ३ ॥
वर्षर्तौ घनगर्जनं निपतनं वृष्टेर्महामङ्गलं
मार्गाणां परिरोधनं सुबहुशो निम्नोन्नतत्त्वापहम् ।
एकत्रीकरणं सतां बहुतिथं तत्सत्रिणां सत्रदं
विद्युद्रोहितकार्मुकादिकरकः सम्पादने जायते ॥ ४ ॥

शालीनां नवरोपणं विक्रमनं शक्रेण गुप्तस्य हि
खद्योतालिपरम्परावितननं खद्योतनच्छादनम् ।
कामानामनुसारतो हरिशिवौ वा पूजनं कार्यते
विप्राणां प्रतिपूजनं च नियतं यन्मुक्तिभुक्तिप्रदम् ॥ ५ ॥
यं दृष्ट्वा बहुचिन्तयन्ति रहिता योषा रुदन्त्यो वणिग्
लोकानामतिगर्जने न भयदं विद्युन् समालिङ्गिनम् ।
तासां भर्तृसमागमं रचयते मेघः स एवार्थितः
तच्चित्तं करुणार्द्रतामुपनयँस्तस्मात् परो नोदयी ॥ ६ ॥
व्रीहीणां परिपाकता शरदतो पुंसं गतो योषितो
गर्भिण्यः खलु राजयन्ति नृपतीच्छागतिविध्वंसने ।
स्वं स्थानं पथिका जलैर्बहुतरं रुद्धा जिगांसन्ति यच्
चन्द्रस्य प्रतिभेददर्शी मुररिपू रासक्रियां वाञ्छति ॥ ७ ॥
सानन्दं बहुपार्षदा विदधतीशक्रीडने ताण्डवे
वादित्रध्वनितुम्बुरध्वनिमृदङ्गावादने तत्पराः ।
साहाय्यं प्रतिबिम्यती भगवती साश्चर्यमालिङ्गति
लोकानां प्रलयेऽतिशङ्कितमना नृत्यत्पतिं रुन्धति ॥ ८ ॥
यत्रादैवतमानुपाठविचरं हृष्यन्ति सर्वे मुहुः
पूजान्नादिपशव्यलाभसुखिताः श्राद्धादिदानादृताः ।
लक्ष्मीजागरणं व्रतादिकरणं यत्कार्तिके पुण्यदं
माहात्म्यश्रवणं फलादिबहुलं जागर्ति यन्माधवः ॥ ९ ॥
शिष्या सिंहजना उदासिविमला गोविन्दसिंहस्य वै
प्रीत्यै भक्तिरताः सुशब्दनिरता गाने तथा श्रावणे ।
सद्ग्रन्थस्य विचारणे विवरणे पाठे महेच्छायुता
धन्यास्ते कलिनिग्रहेऽतिनिपुणा दानेऽतिथेः पूजने ॥ १० ॥

हेमन्ते हिमपतनेन पीडितोष्ठाः
पत्याढ्या रजनिमहाविलासतृप्ताः ।
रात्र्यन्ते त्रिषधरवैरिनादतप्ता
योषास्तद्विरहभयेन पीडितास्ताः ॥ ११ ॥

रात्र्यन्ते श्रुतसारिकाशुकरवा वैतालिकध्वन्नगी-
भेर्यादिध्वनिकर्णनेन चकिता गुर्वादिमद्वन्दनम् ।
कुर्वत्या बहुदासिका अपि पतीन् वन्दन्त एवाङ्गना
गार्हस्थ्ये सुखसंयुता इति महापुण्यद्रुमोत्थं फलम् ॥ १२ ॥

माघे पाश्चात्यभागेऽमृतसरसि सदा सम्प्लुता शीततोये
ग्रन्थश्रावैकयुक्ता गुरुकथितपदध्यानगाने रताश्च ।
द्रव्यत्यागेन तुष्टाः सदमरभजनानन्दतृप्ता जना यत्
कारुण्यात् श्रीगुरूणामभयवरदयादानशोभाकराणाम् ॥ १३ ॥

भैरव्या वेशयुक्ताः पटहडमरुकावादिनश्चन्द्रचूर्णै-
र्लिम्पन्त्योऽन्योन्यमास्ये भडउभडउवादेन सन्तुष्टचित्ताः ।
सन्ध्यानेहस्यतृप्ता बहुतृणदहने होलिकां दाहयन्तः
सर्वेषां रीतिरेवं प्रतिशरदमहो सर्वलोकाः सुखाढ्याः ॥१४॥

सत्याहिंसार्जवादम्भगुरुभजनशौचादिकाभ्यासयुक्ताः
सिंहाः शिष्याः सशस्त्रा रणकृतिनिरता नीचहिंसानुरक्ताः ।
पुत्रस्त्रीभ्रातृदासाननवरतमहो पालयन्ति स्वधान्यै-
रित्थं ये वर्त्तयन्ते त इह परगताः सौख्यकीर्त्तीष्टभाजः ॥१५॥

वासन्तीपुष्पमालाचमरविधुवनैर्गन्धधूपप्रदीपै-
रान्दोलन्तंश्च वसन्ते रथकशिपुगतं पूजितं साधुवृन्दैः ।

श्रीगोविन्दं दयालुं नयनविषयगं कुर्वते ये जनौघा-
स्ते सर्वे मुक्तिभाजः अनन्तमहिमा पुत्रवस्वभ्युपेताः ॥१६॥

इति श्रीकृष्णकौरमिश्रकृते श्रथङ्कु काव्ये
ग्रीष्मादिऋतुषट्कवर्णनं नाम
चतुर्थः सर्गः समाप्तः ॥

---

## पञ्चमः सर्गः ।

### अमृतसरआह्निककृत्यवर्णनम् ।

स्नात्वा समागत्य नरा नमन्ति
कुर्वन्ति सव्येन गतिं शुभां च ।
प्रविश्य पश्चाद्भवनं विलोक्य
स्तुवन्ति साधून् श्रवणप्रवृत्तान् ॥ १ ॥

परस्परं वाहगुरू ततश्च
जी दी फते वाक्यमुदाहरन्ति ।
स्थित्वा च तस्मिन् श्रवणं करन्ति (?)
श्रीग्रन्थजीवाक्समुदायकस्य ॥ २ ॥

वित्तानुसारेण कपर्दिकादि-
लक्षान्तपूजां दधते समाग्याः ।
तेषां फलं प्रीतिविशेषभाजां
मनोनुकूलं भवतीति निष्ठा ॥ ३ ॥

कुर्वन्ति दानं च नमन्ति साधून्
पठन्ति वाक्यं गुरुभक्तिनिष्ठम् ।
कलिं विशीर्यन्ति मतिं नयन्ति
शुभां भजन्ते बहु मानयन्ति ॥ ४ ॥

स्थले स्थले ज्ञानविरागभक्ति-
श्रद्धादयाकीर्तनसंयुतानाम् ।
नित्यं समाजो बहुधा नराणां
लोकोपकारैकपरायणानाम् ॥ ५ ॥

क्वचिद्धि ध्याननिष्ठा क्वचिद्दाननिष्ठा
क्वचिद्भक्तिनिष्ठा समाध्येकनिष्ठा ।
क्वचिल्लोकवार्ताग्नानां विवादो
गुरोः सृष्टिरेषा विधातुर्नवैव ॥ ६ ॥

गुरुग्रन्थपाठे श्रुतौ व्याकृतौ च
रतानामिहायुः शुभं नीयते वै ।
इयं ग्रन्थवृत्तिः प्रवृत्ता जनेषु
त्रिमार्गेव गङ्गा पुनाति त्रिलोकम् ॥ ७ ॥

कवित्वमग्नाः पठने सुलग्नाः
केचित् कथाख्यानविधौ प्रपन्नाः ।
ह्रस्वप्लुतोदात्तविचारसक्ता
गान्धर्वविद्याभ्यसनानुरक्ताः ॥ ८ ॥

मृदङ्गतुम्बीरवकाहलोच्च-
स्वरैः सुमन्नादितदिक्तटानाम् ।
गीतिक्रियारागविचक्षणानां
कर्तुं स्तुतिं कः प्रसहेत लोके ॥ ९ ॥

उष्णीषसत्कञ्चुकपट्टवस्त्रा
नीलाम्बराः खड्गभुशुण्डियुक्ताः ।
पञ्चास्य शिष्या गुरुभक्तिनम्रा
अत्र स्थिता वैरविरोधहीनाः ॥ १० ॥

मदा गुरूणां कृपयाप्तराज्याः
पदातिहस्त्यश्वरथाग्रशोभाः ।
ग्रामाटवीपर्वतराजधानी-
भोगैः सुखाढ्या धनमानयुक्ताः ॥ ११ ॥

वणिग्जना अत्र निवासिनो ये
स्नातुं समायान्त्यतिपुण्यभाजः ।
मनोभिलाषादधिकं लभन्ते
पुत्रस्वधान्यादिपरत्र सौख्यम् ॥ १२ ॥

सन्माल्यवस्त्रकटकाङ्गदनूपुराढ्या
नीवीनिबन्धनिरता नयनानुरागाः ।
स्नातुं गमागमरताः शुभपुत्रयुक्ता
अत्राङ्गनाः परमहर्षकरा जनानाम् ॥ १३ ॥

स्नात्वा धनान्नवसनानि फलानि पुष्पा-
ण्यादाय लम्बितकरा द्विजतीर्थसत्सु ।
एवं विहारसहिताः श्रुतिकुण्डलाक्ता
नार्यो भवन्ति धनिनामिव देवदाराः ॥१४॥

यैः पूर्वं बहुदानमानभजनानुष्ठानसेवापरै-
र्विप्राः साध्वतिथिप्रवासिशमिभिर्युक्ता सदा पूजकाः ।
गत्वा स्वर्गमनर्गलं च विधृतं तैः पुण्यशेषेऽधुना
प्राप्तैरत्र मनोरथादिरचना सम्भुज्यते स्वेच्छया ॥ १५ ॥

श्रीकान्तिहृष्टिमतिसन्नतिभूतितुष्टि-
पुष्ट्यादिमातृगणपूजितसर्वकामाः ।
श्रीमन्त एव परकीयनिजीयवर्ग-
रक्षाकरा इह विभान्ति रवीन्दुतुल्याः ॥१६॥

इति श्रीकृष्णकोरामिश्रविरचिते श्रयङ्के काव्ये अमृतसर आह्निककृत्यवर्णनं
नाम सर्ग पञ्चमः समाप्तः ॥

# षष्ठः सर्गः ।

## श्रीनानकाद्यर्जुनान्तानां राज्यादिव्यवहारनिरूपणम् ।

जातो भोजनराधिपोऽस्ति सुमहान् रायादिकस्तत्पुरं
चातुर्वर्ण्यहितास्पदं च तिलवण्डीनामकं राजते ।
तद्वासी धनधान्यवान् भुजजनिर्वेदी प्रतिष्ठां गतः
कालूनामधरस्तु यस्य सुभगः सूनुः शुभो नानकः ॥ १ ॥
राजर्षेरवतारतामुपगतः पृथ्वीमहामङ्गलो
योगीवाष्टविभूतिमान् प्रकटताहीनः परोक्षप्रियः ।
यः शिष्ये फणिवारितातपकरश्छायानिरोधी तरो-
र्लोकज्ञातमहाविभूतिरपि तत्पित्रा न वै सम्मतः ॥ २ ॥
वाणिज्ये च नियोजितो वसुकरे दत्त्वोपदिष्टः स्वयं
पित्रेनद्धनमर्जितं शुभकृतौ योज्यं त्वया बुद्धितः ।
श्रुत्वैतद्वचनं प्रदश्य च सतां तन्मण्डलं दत्तवान्
क्रीत्वा धान्यघृतान्नचूर्णममलं कृत्ये शुभे युक्तवान् ॥ ३ ॥
पित्रोक्तः पशुपो भव स्वमहिषीस्सञ्चारयन्नाशये-
स्तत्क्षेत्रान्नकणं प्रदर्श्य च पुनः सम्पूरितं पूर्ववत् ।
आश्चर्यं जनयन् स वासकजनं पित्रे पुनः प्रोदितः
सर्वैराश्रमवासिभिस्तव सुतो योगी महाबुद्धिमान् ॥ ४ ॥
पित्रा व्यूढ इतो गृहाश्रममतः पुत्रद्वयं लब्धवान्
श्रीचन्द्रः प्रथमो गुणैरनवमः श्रीमाञ्छिवार्द्रभाक् ।
लक्ष्मीदास इति द्वितीय उपमाहीनः सुतोऽभून्महान्
वैराग्यं परमं गतौ जगति सन्मिथ्याविवेकान्वितौ ॥ ५ ॥
आयुर्वर्षमिति द्विसप्त रचितं मासेषु सप्ताहकं
कृत्वा राज्यमखण्डितं भुवि जनानुद्धारयन् स्वाश्रयान् ।

श्रीमद्ब्रह्मपराक्रमो हि महलेति ख्यापयन् भक्तितो
ज्ञानं भक्तिविरागयुक्तममलं सम्भाषते भाषया ॥ ६ ॥
ज्ञातो वै त्रिहुणेतिजातिविमले चात्र कुले सोऽङ्गदो
भूत्वा राज्यमखण्डितं च शरदां तद्द्वादशं मासषट् ।
घस्राणां नवकं चकार सुभगे क्षात्रे कुले लब्धवा-
नुद्वाहं सुतयोर्द्वयं जनितवान् दास्रू च दातू प्रथम् ॥ ७ ॥
शान्तर्णः पितृदेवतर्षिभजनानन्दं समादर्शयन्
भक्तांस्तारयति स्म सम्प्रचलितः काष्ठां परां भूतले ।
भाषाबन्धनकारकस्तु भगवान् माहात्म्यसंसूचको
मन्दानामधिकारिणां सुगहनं श्रीमत्पदं प्रापयन् ॥ ८ ॥
भल्लासंज्ञकबाहुजो ह्यमरदासो वासरग्राम के
वासी राज्यमवाप सो भुवितले श्रीगोंदवाले वसन्।
द्वाविंशं शरदां क्षितिक्षितिमिताहर्मासकं पञ्चकं
भक्तान् भक्त्युपदेशतश्च विमलान् सन्तारयन् भूतले ॥ ९ ॥
क्षत्रज्ञातिकुले विवाहमकरोत् सन्तानसिद्ध्यै प्रभुः
तस्मात् पुत्रयुगं सुतायुतमभूत्तन्मोहरीमोहनम् ।
भानीसंज्ञकमाशुभूमिसुखदं पित्र्यर्णसम्मोक्षदं
विप्रज्ञात्यतिथीशपूजनरतः शिक्षन् जनान् सेवकान् ॥१०॥
सोढीजातिरनुत्तमः प्रियहितः श्रीरामदासोऽभवत्
सोऽयं तीर्थमिदं सुधासर इति प्रावर्त्तयद् भूतले ।
षड्वर्षैकदशाख्यमासदिवसाष्टैकं च राज्यं महत्
कुर्वन्नुद्वहनं सुतत्रयमवापार्जुन्यपृथ्वीश्वरौ ॥ ११ ॥
संसारऋणमोचकं किल महादेवं तृतीयं सुतं
साक्षाच्छम्भुवदेव शोभितमहो कारुण्यपूर्णं पृथुम् ।

लोकानां परदेशनिष्ठितवतां घ्यानात् पुमर्थं ददत्
सोऽयं भाति महीतले पृथुयशाः श्रीरामवन्सुन्दरः ॥ १२ ॥

मर्यादाकरणं जगद्धितकरो भिक्षागृहीतावनिः
पर्यन्तावनिनायकेभ्य इव वै विष्णुर्बलेर्वामनः ।
ग्रामे वासयिता चतुर्जनसमाजं सौख्यभाजं सदा
कुर्वन् शिष्यजनस्य भाति हृदये कारुण्यवारां निधिः ॥ १३ ॥

तस्माद्राज्यपदं स्थितं स्वकगणे मोढीजनुर्धारिणि
दत्तं श्रीगुरुणा स्वभक्तिनिरतैः स्त्रीणां गणैर्युक्तितः ।
सम्यक् प्रार्थनबोधितेन हि सदा संराजते भूरिशो
यूयं भो नमतेदृशं कुलहितं राजन्यशोभाधरम् ॥ १४ ॥

आभात्यर्जुनसंज्ञकः क्षितिपतिः पञ्चस्थलेऽधिष्ठित
एकाहो नवमासिकं जिनशरद्राज्यं चकारादृतः ।
पुत्रं प्राप महोदयं च हरिगोविन्दाभिधानं सुधी-
र्यस्मिन् वाहगुरूमनुप्रकटितो नाम्नि स्थितस्तं नुमः ॥ १५ ॥

साहस्रं भुजमण्डलं न वहति स्वीयं तथा कार्यकृ-
त्तेजो बाहुसहस्रकस्य वहिता यः सव्यसाचिद्युतिः ।
शस्त्रास्त्रव्यवहृत्यनन्तचतुरः श्रीमच्छिवाराधको
यन्नामग्रहणेन सिद्धिरखिला सत्सेवके सोऽर्जुनः ॥ १६ ॥

इति श्रीकृष्णकौरमिश्रविरचिते श्रघक्के काव्ये
श्रीनानकाद्यर्जुनान्तानां राज्यादि-
व्यवहारनिरूपणं नाम षष्ठः
सर्गः समाप्तः ॥ ६ ॥

———o———

# सप्तमः सर्गः ।

## हरिगोविन्दादिखालसान्तवर्णनम्

सोऽयं राज्ये स्थितोऽभूत् सपदि हरिगोविन्दनामा जिनारिः
क्षात्रं कृत्वा विवाहं शरसुतयुगतोऽटल्लरायश्चतुर्थः ।
द्विःस्थाने सूर्यमल्लः प्रथमजं गुरुदित्तस्त्यणीरायनामा
कीर्त्त्योषध्यालवालो दशदलविदितस्तेगबाहादराख्यः ॥ १ ॥
तस्याग्रे हरिरायबाहुजवरः सोऽयं पदव्यां स्थितो
राज्यस्य द्वयपुत्रवान् स हरिकृष्णो रामरायान्वितः ।
षण्मासं दिनभृतकं त्र्यधिकविंशं वर्षसंख्यान्वितं
राज्यं यश्चकृवान् हरेश्च पदभाग् मानी सदा योगवान् ॥ २ ॥
तत्सूनुर्हरिकृष्ण एव वसुसंख्याकं पदं भुक्तवान्
द्वौ वर्षाविषुमासकं नवधरायस्त्रं सुखस्यास्पदम् ।
शिष्यभ्रातृसुताङ्गनासुखयुतं शिष्यौघसन्तारकं
लब्ध्वा राज्यमिदं बभाज सुभगं श्रीकृष्णरूपं हरिम् ॥ ३ ॥
षष्ठे राज्यपदे स्थितस्य हरिगोविन्दस्य सूनुर्लघुर्यो
वै श्रेष्ठगुणैर्गुरुस्त्वभिधया यस्तेगबाहादरः ।
सोऽयं नव्यपदं नवाभिधमहो लेभे महल्लाख्यकं
श्रीगोविन्दहरिं सुतं स्म भव (ज ?) ते शक्रो जयन्तं यथा ॥४॥
खैकं वर्षमितिस्तु मासतुरगं घस्त्रैकविंशं तथा
राज्यं चान्वभवत् सुताय च परं श्रेष्ठं स्वयं दत्तवान् ।
श्रीगोविन्दपदान्तसिंहललितायारातिनाशाय च
माषोवालनिवासिने जनसुखायानन्दपूर्वासिने ॥ ५ ॥
विद्याचातुर्यशाली धनुरवनपरो धारयन् वै निषङ्गी
भक्तोद्धारी महिष्ठो हतरिपुनिवहो भाति सङ्ग्रामशाली ।

आपूर्व पश्चिमान्तं हिमपटलधरद्विन्ध्यमध्ये यशोधा
वाजिप्रेमा वदान्यो विनरणनिरतो धान्यवासो मणीनाम् ॥६॥
द्वात्रिंशद्वर्षमामेकदशमितनृपत्वं चकारैकलील:
क्षत्रज्ञाता विवाहत्रयमितगृहधर्मा चतुःसूनुशाली।
सुन्दर्य्यां देविकायामजितमृगपतिं पूर्वमुत्पाद्य सूनुं
जीतोजीअङ्गनायां त्रयसुतमुपवीतादियुक्तं चकार ॥ ७ ॥
सूनुत्रय्या झुझारो मृगपतिसहितस्तज्जुरावर्नृसिंह-
स्तुर्यः सिंहः फतेपूर्व इति जगति वै विश्रुतं यस्य नाम।
तान् पुत्रान् वन्दनीयानभव (ज ?) त सुखदान् ये न संसारसौख्यं
प्राप्तो गोविन्दसिंहो रिपुमिषवशतस्तद्विनष्टिं च सेहे ॥ ८ ॥
दुष्टम्लेच्छैर्विपण्णः प्रतिकृतिकृतयेऽनेकमन्युर्बभूव
क्रोधाग्नेर्विस्फुलिङ्गैः प्रतिदिशपतितैः सर्ववर्णे समुत्थैः।
जातः श्रीखालसाख्यः स्वयमिव बहुधा शक्तिसम्पन्नचेष्टः
शुम्भादीन् हन्तुकामा प्रकटयति यथा कौशिकीकालिकाख्या ॥९
तच्छत्रुक्रन्दनादो निपुणतरमतिः प्रत्यहं वर्धनोत्को
देशान् देशान् लुठन् वै वसु किमपि बलिं तत्प्रजाभ्यः प्रगृह्णन्
रक्षांचक्रे दयालुर्व्यवहृतवणिजः प्रापयन् सौख्ययुक्तान्
ग्रामानित्थं स्वकीयान् विरचयितुमनाः क्षत्रविप्राधिमानी ॥१०॥
पाश्चात्येशं जिघांसुः स्वबलपुरुषतां प्रापयन् सिंहराट्सु
तस्यानीकं विलुण्ठ्यश्वढतहरिजसासिंहकादिष्वनन्ताम्।
सेनामध्येऽश्ववारानसिशरधनुषोद्धारकान् दर्शयित्वा
तेषां भीत्या पलायां गृहधनमहिलाः कुर्वतां लुण्ठति स्म ॥११॥
इन्द्रप्रस्थं यियासुर्लघुतरपृतनः प्रेरयामास सिंहान्
जस्सासिंहं खुशालं जयहरिचढतासिंहताराम्रृगेन्द्रम्।

श्रुत्वा तेषां प्रयाणं व्यथितजनमनाः प्रेषयामास दूतं
मर्यादापङ्क्तिमिच्छुर्धनचयसहितं लेख्यपत्रं दिल्लीशः ॥१२॥
सेनामध्ये पुमान् यो न हि न हि करणीयं जगादेति कश्चित्
स्तम्भिर्मश्चक्रे विरुद्धश्च प्रतिगमनमतिं सर्व एव प्रचक्रुः ।
नो तस्याप्युत्तरं वै प्रतिनियततया दत्तवन्तः प्रतीप-
माजग्मुस्ते मृगेन्द्रा व्यवहृतिगणना नास्ति येषां समूहे ॥१३॥
झण्डासिंहः समीपेऽमृतसरस इयेष स्थलं वस्तुकामो
श्रुत्वा गढं वै सकलनगरगा मानुषा आगताश्च ।
लोका व्यापारवन्तः कृतयुगनियतिं कौतुकं दृष्टवन्तः
सौख्यं प्रापुः समृद्धिं धनहयमणिवस्त्रादिकानां मुशाग्रम् ॥१४॥
एवं सर्वैस्तु सिंहैरभिलषितमिदं पत्तनानि प्रचक्रु-
स्तेऽन्योन्यं बद्धवैराः प्रतिदिनममितं योद्धुकामाः पृथक्त्वात् ।
सर्वे श्रीखालसेन प्रहतमतितया योजिता नैकनिष्ठा
एवं वै खालसेन्द्रः सकलनृपमनःक्षोभको भाति लोके ॥१५॥
बह्वायुः खालसेशः प्रथितजनवचाः प्रस्खलन् बालकत्वा-
च्छत्रूणां नाशकश्च प्रततगुणयशाः सर्वदिग्राजभागी ।
विप्राणां सज्जनानां प्रणयहितकरो दानमानादिशील
एवं वर्धिष्यते श्रीमृगपतिषु गुरोः सेवकेषु प्रवृत्तः ॥१६॥

इति श्रीकृष्णकौरमिश्रविरचिते श्रयङ्क काव्ये हरिगोवि-
न्दादिखालसान्तवर्णनं नाम सप्तमः
सर्गः समाप्तः ॥ ७ ॥



# अष्टमः सर्गः ।

## मन्त्रसाधनखड्गाविर्भावतन्माहात्म्यमङ्गलानिरूपणम् ।

श्रीकालीसिद्धिकामः स कुसुरसमुदायं समाहूय पृच्छँ-
स्तैरुक्तः काशिकायामिति वसति महाभङ्गजीपूर्णनामा ।
यन्त्रज्ञो मन्त्रविद्यागमनिगममसृहस्य विज्ञानशाली
द्रव्यं सम्प्रेष्य भक्त्या वशय सुचतुरं तेन सिद्धिर्भवित्री ॥१॥
पाद्यार्घ्यादीन् स दत्त्वा वदति कुशलतापूर्वकं स प्रणम्य
कश्चिन् मन्त्रं सदेवं कथयतु भगवान् येन देवी प्रसिद्धा ।
शत्रून् सम्मर्दयन्ती दिशतु महाभाग्यवत्तामतीव
सेवाकारी सदाहं चरणयुगलयोः श्रीमतां भक्तिपूर्वम् ॥२॥
बाढं प्रोवाच भो भो कठिनतरमिदं तिष्यकाले नराणां
प्रोक्तान्येतानि देव्यै पितृवनचितयोः साधनादीनि सद्यः ।
शर्वेणेति त्वदर्थं घनतरनिपुणे नैव भावेन यत्तः
कालीं संसाधयिष्ये बहुतरसमयेनैव साध्या हि देवाः ॥३॥
श्रुत्वैवं श्रेष्ठ्यकामः पुनरपि स वदँस्तेन काल्या नियुक्तः
पूजायां केशधारी नियतमसिधरो नीलवासा भव त्वम् ।
धैर्यं चालम्ब्य दार्ढ्यात् पशुबलिविधिना ध्यानजापैकसक्त
एवं वै मण्डलान्ते फलमपि भविता साधनेनोत्तरेण ॥४॥
आकर्ण्येत्थं जजाप प्रबलमनुवरं कालिकाया भवान्या-
स्तौण्यादीक्षाविहीनो ह्यनतगणपतिः शत्रुहिंसैकचित्तः ।
यं यं भावं स्मरेद्यः स दृढमतितया तं तमेवैति लोकः
प्रादुर्भूतस्ततोऽसिः शतशतह्रदा तेजसाक्रान्तदृष्टिः ॥५॥
चित्ते भ्रान्तिं चकार स्वयमपि वहितस्यासनात् प्रोत्थितस्य
तस्माच्चच्छत्रुघाती प्रचुरतरगतिश्चण्डिकाखड्ग एव ।

कार्यं संसाधयत्यैव हृदिजनिरुषा विस्फुलिङ्गैः स एव
जातः श्रीख़ालसाख्यो मृगपतिविभवः शत्रुहन्ता वहुभ्यः ॥६॥
योऽष्टौ नामानि चित्ते सरति स विजयी श्रीयुतो धर्मपालो
दुर्धर्षतीक्ष्णवेगोऽरिविशसनपरः क्षेपकः खड्गवत् स्यात् ।
खड्गोऽसिस्तीक्ष्णधारो विशसनविजयश्रीयुतो धर्मपालो
दुर्धर्षश्चेति नामानि विधिमुखभवानि प्रथमागतानि ॥ ७ ॥
राज्यं दानारिहन्ता वृजिनविशसिना तीक्ष्णधाराविधर्त्ता
लोकश्रीगर्भकर्त्ता विजय इव दुराधर्षिना धर्मपाता ।
दुष्टान् खड्गेन हन्ता दुरितचयचमूः शामिता भक्तभर्त्ता
स्थाता दुर्गाकराब्जे द्रुहिणहरविभृन् शत्रुनाशे प्रयोक्ता ॥८॥
काल्याद्या येन दैत्यान् मधुमहिषनिशुम्भास्रवीजाञ्जिजघ्नुः
खड्गेनानेन तेन प्रसृतबलमहातेजसा खालसेन ।
सर्वैश्वर्यैरुपेताः क्षितिमणिवसनद्रव्यवन्तो विभान्ति
सिंहा आविष्टवर्ष्मा भजनजपपरान् मानयन्तः पृथिव्याम् ॥९॥
विप्रव्रातसुपालनैकचतुराः श्रीचण्डिकापूजका
वासन्ते शरदि प्रपूजनरता होमादिविप्रार्चनैः ।
कूष्माण्डाजबलिं विधाय सुभगाकन्याकुमारार्चकाः
पुत्रभ्रातृसुदारधान्यधनयुक सौख्याश्चिरञ्जीविनः ॥१०॥
केचित्प्राक्तनजं बलं विदधतः शास्त्रादिनिन्दारताः
पौर्वापर्यविचारहीनमतयो गोविन्दसिंहस्य यत् ।
तेनैवाददते मतं सुविपुलं स्वाचारसम्मर्दका-
स्तैः सार्कं किमु वेदशास्त्रगुरुवाक्याज्ञासमुल्लङ्घिभिः ॥११॥
उत्थाय क्षणदावशेषसमये स्नाता रता वाचने
ग्रन्थस्य श्रवणे निरुक्तिकरणे गाने तथा वादने ।

प्रीताः प्रीतिमथापयन्ति सुजनानां शृण्वतां मानसे
ते धन्याः शुभमानसाः कलियुगे सत्कीर्त्तने तत्पराः ॥१२॥

पञ्चब्रह्ममृगाधिपासनगता वाक्कामशक्तिस्थिरा
विद्याद्याभयदानवाञ्छितकरा मन्त्रैर्मुनीशैर्नुता ।
वासोरक्तवृता शिरोविधुयुता श्रीबालिकाहृद्रता
पायान्माखिलविघ्नराशिहरिणी भद्रा प्रसन्ना सदा ॥१३॥

भद्रा भागवती भुजङ्गवलिता भाग्येश्वरी भोगदा
भोक्त्री भक्तवशा भुजाम्बुधिपरा भोगैकनिष्ठा भगा ।
भर्गेशी भृगुवन्दिता भगवती भूषाव्रजैर्भूषिता
भूयाद्भद्रकरी भवाङ्गभजनानन्दा भवानी भुवि ॥१४॥

पञ्चाशद्वरवर्णपङ्क्तिरचिताङ्गा वैखरी देवता
नाभीहृद्दलभास्वती पुरहुतिः पश्यन्तिका मध्यमा ।
स्थानाऽर्धा बहिरन्तरप्रचलिता हृत्साक्षिणी कुण्डली
सर्वप्राणनजीविनी न हि विना तां चित् कलां किञ्चन ॥१५॥

ग्रन्थादौ ग्रन्थमध्ये तदवसितिविधौ कुर्वते मङ्गलं ये
तेषां देवीप्रसादो भवति हि सततं चायुरारोग्यवृद्धिः ।
लक्ष्मीधान्याभिवृद्धिं श्रियमतुलमहामण्डनां प्राप्नुयुस्ते
वक्तृश्रोत्रोर्हितेच्छुःपुरुषफलचतुष्कं च दद्याद् भवानी ॥१६॥

इति श्रीकृष्णकौरमिश्रविरचिते श्रयङ्कु काव्ये
मन्त्रसाधनखङ्गाविर्भावतन्माहात्म्य-
मङ्गलनिरूपण नाम सर्गोऽष्टमः
समाप्तः ॥ ८ ॥



# नवमः सर्गः ।

## मङ्गलाचरणसिद्धाविर्भावपूर्वकसरोविरचनम्

ब्रह्माद्याः पञ्च यस्याः पदकमलयुगोद्घाहिपीठे निषेदु-
र्नित्यं यन्मान्निधिन्वाद्धलपरिभवतः प्रेतभावं वहन्तः ।
तत्रस्था बालिका सा मनुमुनिनिकरैः पूजिता नम्रशीर्षैः
भक्तानां कार्यसिद्धया अभयवरकरी माऽवतात् मोक्षविद्या ॥१॥
पादद्वन्द्वं नमामि स्वर्गनिकरवमत् स्वर्णमञ्जीरशोभि
लाक्षारागप्रवेण प्लुतसकलमहीं ध्यायतां ते शुभं यु ।
ब्रह्मादीनां शिरःसु स्वरवनिरुहजन्मकुपतद्रेणुरूक्षं
मीमांसान्यायविद्यागमनिगमतुरङ्गास्यमङ्गीतकीर्ति ॥२॥
नीलाम्भोदावलीरुक्तपनशिशिरमुधव्यवाड्लोचनाद्या
दंष्ट्रावल्यावलीढा सुररुधिरचमत्कातिभीष्मस्वरूपा ।
वैयाघ्रच्छन्नदेहा जयति हि जगतां शम्मवित्री स्वनाम्ना
शीर्षाणां मालिकाभिर्भुजगगणयुताभिर्युता कण्ठदेशे ॥३॥
धन्यास्ते वीतदोषा हरमहिषि नरा ये शुभां त्वां भजन्ते
मूलाधारात् प्रयान्तीं कमलवनमहारुद्रपीठं भुजङ्गीम् ।
तत्रास्वाद्यामृतालीमवतरणपरां साधकानां हृदब्जे
ब्रह्माणं दं(सं ?)दधानामकरणविषयां वै मृणालातिसूक्ष्माम् ॥४॥
चतुः श्लोकीमेतां भवति भवदीयस्तुतिपरां
नरो यो लोकेऽस्मिन् पठति कवितायां स उशना ।
अलेके (?) भूपानां मणिरिव प्रभाभासितककु-
प्तिरस्कर्त्ता कान्त्या मदनमहिमानं स मनुजः ॥ ५ ॥
इत्थं देव्याः स्तुतिमविकलां यः शृणोति प्रसन्नः
सर्वश्रेष्ठां हृदयरुचिरां वन्दनीयो भवेत् सः ।

दारिद्र्यापच्छमलदमनं तस्य पुंसः स्वसिद्धं
पुण्योत्कर्षादपि करगतं पुत्रपौत्राभिवृद्धिः ॥ ६ ॥

त्वद्दासागारकस्याजिरमुपसमितः कृष्णकोंगे द्विजोऽहं
दृष्टं सत्कर्मवेगात् परमगुरुकृपापूरिताच्छोभमानम् ।
स्वीयायाः पादुकायाः स्ववशकृतगतायातकृत्यैर्महेशि-
स्पर्शः कार्यो मदङ्गे भवतु मम महाभाग्यवत्ता यतो हि ॥ ७॥

आदिगुरुःकमलाधिपतिर्यशसा प्रथितो भुवि दानरती
राधिकया युत एव वने व्रजवासिजनैर्मुदितः सुमतिः ।
श्रीवज्रराजिविराजितमन्दगतिर्व्रजबालसमाजरतिः
तैः शुभभक्तिविरागविवेचनवद्भिरुपासितपादततिः ॥ ८ ॥

इमं कृष्णं नत्वा गणपतिभवानीशसहितं
पुरावन्माहात्म्यं रचयितुमलं प्रेरितमनाः ।
गुणग्रामैर्वर्त्ते पुरुमहिमभाजामनवधि
नखस्यान्तं तार्क्ष्यो गमयति यथा वेगचलितः ॥ ९ ॥

अथैकस्मिन् काले विरचयितुकामस्तु स सरो
गुरु रामो दासः क्षितिखननमेवारभत हि ।
पुरो नीचैः खातादमररचितं स्थानमुदभू-
त्ततः सिद्धो दृष्टो दृढतरसमाध्येकनिलयः ॥ १० ॥

शिरोमध्येऽभ्यङ्गाद् धृतरससमाविश्य बहितः
पुरो नेत्रोन्मीलन् कलिनरसमाजेन चकितः ।
उवाचोच्चैर्भूयो गृहमिव पुराम्नं स्थगयत
नतो भूयो भक्त्या गुरुप्रभृतिलोकेन मुदितः ॥ ११ ॥

स तैः पृष्टः कस्त्वं किमवधिककालेन निरतः
समाधौ तेनोक्तं कृतयुगनृपेक्ष्वाकुवसतौ ।

स्थितो यत्नोऽहं वै त्वमपि तदपत्येषु कृतम
इति श्रुत्वा तेन स्थगितमिदमेवं हि गुरुणा ॥ १२ ॥

ततो लोके ज्ञानं नृपकुलममुष्येन प्रभुणा
स्वभूमावारब्धं मर इति मर्मापक्षितिधरैः ।
धरा दत्ता तेन स्वयमपि पुरी विस्तरवती
महापुण्यैः पूर्णा बहुसरसशोभागुणवती ॥ १३ ॥

तस्मात्तीर्थमिदं पुराणमहिमं यत्सिद्धवाक्सत्कृतं
शुद्धान्तःकरणैर्जनैरवहितैर्यत्सेवितं मोक्षदम् ।
त्रैवर्ग्यस्य फलं स्वचित्तवशतः कल्पद्रुमामासितं
लब्धं पुण्यगणैः पुराभवभवैर्यद्दुर्लभं हस्तगम् ॥ १४ ॥

दूराद्ये समुपागताः श्रुतमहाशोभा अहो पश्यत
दृष्ट्वा भक्तिबलेन पूरितमहाकामास्त एवं ध्रुवम् ।
लक्ष्मीराज्यविभूतिकीर्तिमहिताः सम्यक् प्रतिष्ठां गताः
लोके वै कलिकालविक्रमपरिक्रान्तेन सङ्क्रामिताः ॥ १५ ॥

श्रीमद्भक्त्येकनिष्ठागतहृदयतया सर्व एवं विबन्धु-
राद्याद्गोविन्दसिंहावधिममतयो ग्रन्थसद्ग्रन्थनार्द्राः ।
लोके तत्पाठयुक्ता जपभजनरताः सिद्धिमन्तो बभूवु-
र्वश्याकर्षादिदीनोद्धरणमतिपराः श्रीसुखप्रेमरक्ताः ॥ १६ ॥

इति श्रीकृष्णकौरमिश्रविरचिते श्रयङ्के काव्ये
मङ्गलाचरणसिद्धाविर्भावपूर्वकसरोविरचनं
नाम नवमः सर्गः समाप्तः ॥ ९ ॥

———o———

# दशमः सर्गः ।

## बाबानानकाङ्गदयोर्गुणगणमाहात्म्यकथनम् ।

गोरक्षादिकसिद्धमण्डलगतस्तैर्नानको भाषित-
स्त्वं शिष्यो वद कस्य चेत्स भवसि श्रीसिद्धयेऽस्मत्पथे ।
आगच्छ श्रुतिखण्डनात् परमिदं मुद्रादिकं धारय
तत्र श्रीगुरुनानकः स वदति प्राज्ञाः शृणुध्वं सुखम् ॥ १ ॥
सर्वेषां स गुरुश्चिदात्मकतया योऽखण्डितोऽन्तर्गतो
बुद्धिप्राणमनःश्रुतिश्च रहितो यो मूलमन्त्रप्रदः ।
तं भक्त्या ह्यजपाजपेन नियतं सर्वत्र सम्भावये
इत्थं शक्तिमतां वरं परगुरुं यद्दीक्षितोऽहं सुखी ॥ २ ॥
दब्बूपञ्चकनालिकेरतिलकं स्वं मस्तकं नामयन्
उक्तं श्रीगुरुपद्धतौ निविश भो मद्वाक्यमङ्गीकुरु ।
तस्मादङ्गदनाम ते च भविता सर्वे हि ते जानतः
लोके ख्यातिमुपैष्यति प्रगदितः श्रीवासुदेवाभिधाम् ॥ ३ ॥
दृष्ट्वेदं पुनरङ्गदेन गदितं यत्त्वं नतो मत्पुर-
स्तस्मान्मद्वपुषीन्द्रवज्रपतनं वा कुष्टता जायताम् ।
तेनोक्तं तव वाक्यमेव फलिताथो कुष्टभागङ्गदो
वर्षद्वादशकं बभावमरदासेनासेवितः सर्वदा ॥ ४ ॥
एकेद्युः सदनं जगाम सहसा बालाभिधः सज्जनः
तं प्रष्टुं भवतीतिनानकगुरुः कीदृक्तयाराधितः ।
तत्रोचे मनसा विचार्य सुजनं मित्र ! क्षणं श्रूयतां
किञ्चिद्वाक्यनिबन्धनेन कथये तां प्रस्तुतिं नानकीम् ॥ ५ ॥
रात्रौ तद्भवनं जगाम भजनोत्कोऽहं स मां पृष्टवान्
गत्वा सद्मबहिर्विलोकय कियद्रात्रिर्गता सज्जन ।

एवं चान्यजनानपि स्वकमनश्चातुर्यतः प्रोचिरे
रात्रेरेव विनिर्णयं प्रहरकालादि दृष्ट्वा बहिः ॥ ६ ॥
वृद्धा नाम जगाद साधनयनं यामं गता यामिनी ।
पूर्वस्मिन्नरघट्ट एव समयेऽस्माभिः सदा चाल्यते ॥
एवं सर्वजनैरभापि च निशापाश्चात्यभागो ह्ययम् ।
योगस्यापि हरेः स्मृतेरवसरो मंत्रक्रियापूर्वकम् ॥ ७ ॥
पृष्टोऽहं पुनरब्रवं हि सकलो लोकस्तवाधीन्यभाक्
तत्सर्वं विदितं तवैव मनसीत्थं कस्तव स्वाशये ।
विज्ञातुं विदितुं क्षमः पुनरसौ तान् पृष्टवान् पूर्ववत्
पृष्टोऽहं सकलं पुरेव कथयामासेति स प्रीतवान् ॥ ८ ॥
तेनोक्तं वसनानि भो बहिरितो गत्वा मम क्षालय
श्रुत्वेत्थं जगमाहमेव दिवसे जाते समक्षालयम् ।
भूयोऽहं वसनानि तस्य पुरतो धृत्वा निशां पूर्ववत्
ज्ञात्वाश्चर्य्यमवाप संननम भो ज्ञप्तः सशिश्ये तथा ॥ ९ ॥
एकेद्युः पुनरेव पङ्कजलधौ क्षिप्त्वाम्बुपात्रं करात्
पार्श्वे पुत्रयुगं स मामवदकच्चोक्तं तु ताभ्यामिति ।
लङ्घित्वा गहनं विधाय वसतिं प्रेष्यान् गृहीत्वा बहून्
गत्वा कं च निवेश्य भाजनमतो लब्ध्वा समानीयते ॥ १० ॥
तेनान्तःकथितं प्रहस्य मम नो वृत्तं बहिर्दर्शिनौ
जानीतः सहितावुभौ मम सुतौ जानात्ययं चाङ्गदः ।
तस्मान्मत्पदभाग्यवेदयमहो अङ्क्षं मदर्थे दद-
दन्तर्यामिणमेव हरिं गदति वाण्या चित्ततो ज्ञातवान् ॥ ११ ॥
ज्ञप्तोऽहं वसनैर्युतः परिकरं बद्ध्वा दृढं मज्जितः
पात्रं तज्जगृहे निवेद्य मलिनं स्वच्छं पुरो दृष्टवान् ।

वस्त्रं स्वीयमपि स्वतो धवलितं ज्ञात्वा ननामैव त-
मित्थं शेमुषिकां ममानिधवलां कुर्वन् स्वराजेव यः ॥ १२ ॥

एकस्मिन् समये भ्रमन् वनमतश्चोदासिरूपं दधन्
मदानेन युतोऽग्रगगचतुरेणैकान्तशीलोऽभवन् ।
तत्रानन्तमहत्सेवकजनैः पूजायुतैर्वेष्टित
उद्विग्नोऽपि फलान्नभक्तदधिकैरभ्यागतान् पालयन् ॥ १३ ॥

उद्याने बहुधान्यराशिरहिते पीडायुतान् मानवान्
दृष्ट्वा तानवदत् प्रकम्पयत भो बब्बूलमेतं तरुम् ।
आरुह्येनमिहैव भक्तदधिगव्यान्नादिकं लभ्यतां
तैर्नोरीकृतमित्थमित्यगणयन् मामब्रवीद् गृह्यताम् ॥ १४ ॥

श्रुत्वेत्थं वचनं बबूलतरुमारुह्य स्वयं लब्धवान्
सर्वं यत् कथितं स्वयं च गुरुणा तेनातितृप्तः सुखी ।
जातोऽहं शुभबुद्धिरागतपरज्ञानो न सेवेत तं
को जिज्ञासुरिहैव यत्नरहितः सर्वं लभेत् पौरुषम् ॥ १५ ॥

चाण्डालो हरिकीर्त्तनैकरसिकः सर्वाधिकः कीर्त्यते
श्रद्धाहोमतपः समाधिजपतो यश्चित्तगर्वोऽसताम् ।
मानेर्ष्यादि विहाय कीर्त्तनकरस्तस्माद्धृदि श्रीहरिं
सम्प्राप्नोति परत्र चेह सुखभाक् शुद्धः सदानन्दभाक् ॥१६॥

इति श्रीकृष्णकौरमिश्रविरचिते श्रयङ्के काव्ये
बाबानानकाङ्गदयोर्गुणगणमाहात्म्य-
कथनं नाम सर्गो दशमः
समाप्तः ॥ १० ॥

———०———

# एकादशः सर्गः ।

## श्रीबाबानानकाङ्गदअमरदासरामदासार्जनगुणगणमाहात्म्यकथनम् ।

तस्मिन्नेव वने वनेचरवपुर्युक्तः शुनीभिः श्वभिः
सीसीरूपमलौकिकं च भयदं कृत्वा जनौघस्य च ।
हस्ते कार्मुककाण्डभीषितमृगः स्पर्शेऽपि लज्जां ददत्
तादृग्गानकरो हरेर्गुणगणं वैराग्यपूर्वं वदन् ॥ १ ॥

मुखेन निन्दां कथयन् परस्य
कामक्रुधां लोभविमोहपुञ्जम् ।
चाण्डालराशिं हृदि पक्कणे वहन्
शुचिः कथं स्यां हरिकीर्त्तनं विना ॥ २ ॥

एवं शब्दं च गायन् भ्रमति बहु तथा मत्समेतास्त्रयोऽन्ये
पश्चाद्भागदेशे दरदलितमनो वाक्यपादास्तथा सन् ।
भ्राम्यन्तस्तेन हूता यदि न विसृजथास्माकवाक्यं कुरुध्वं
वासश्छन्नं शवमविकलं पादतश्चात्त यूयम् ॥ ३ ॥

एवं श्रुत्वा त्रिभिरपि जनैर्नोररीकृत्य भग्न-
माज्ञसोऽहं पदकमलतस्तद्भुजौ सम्प्रवृत्तः ।
तज्जातं पायसघृतमधुप्यायनं देहबुद्ध्यो-
र्भुक्त्वा पूर्णस्तदखिलमहं भाजनं प्रेमराशेः ॥ ४ ॥

भूयः प्रोक्तं स्वजननिगमे या विलम्बं कुरुध्वं
स्वस्या मातुः स्तनमपिबकं नानकायोक्तमेतत् ।
तेनोक्तं ते मम हृदिगतो भाव आवेदितस्तत्
प्रीतोऽहं ते मम हृदि लग त्वं ममैव स्वरूपः ॥ ५ ॥

यस्त्वामाराधयति ममाराधकः प्रोज्ज्वलास्यो
मुक्तो लोके परभवनगो ब्रह्मसायुज्यमेति ।
त्वं वै पूर्वं विदितलहणानामकः साम्प्रतं ते
श्रीमत्पूज्योऽङ्गद इति भुवि ख्यातनामैव भूयात् ॥ ६ ॥
इत्थं श्रीगुरुनानकस्य महिमा सम्यङ् मयाऽऽलोकित-
स्तेनाहं कृतकृत्यतामुपगतो निश्चिन्त एव स्थितः ।
त्वत् प्रश्नोत्तरमेव ये निगदितं भो बाल कश्चिच्छ्रुतं
भाईबाल उवाच ते निगदितं श्रुत्वा कृतार्थोऽस्म्यहम् ॥ ७ ॥
गोबुस्थानामरदासकस्य बहवः शिष्याः समाजग्मकुः
तेषां भोजनसिद्धये रसवती पाकाधिकारान् बहून् ।
युक्त्वा तत्कृतये जलाय च परान् सम्प्रेरयन् श्रीगुरुः
तत्कुम्भान् क्षितिगोलकैश्च प्रहरन्तो म्लेच्छबालाः सुताः ॥८॥
शेषाख्या हि बभञ्जुरितरं संविद्रते श्रीगुरुं
तानूचे दृतिपात्रमेव कुरुतां ते तान्यभेत्सुः शरैः ।
भूयस्तान् गुरुराह पित्तलमयं पात्रं तथा ताम्रकं
भूयो भेत्सुरपीह शैलपतनं ते तं तथोचुर्गुरुम् ॥ ९ ॥
तैः शिष्यैः पृष्ट एव प्रवदति स गुरुः स्मेति कुर्वन्ति पापं
ये दुष्टाः सज्जनैस्ते सुरगणनिहताः प्रापिता मूलनाशम् ।
वन्ध्यान्ते मृत्युमापुः क्रुधितनृपवशाद्ध्रस्वदीर्घाश्च सर्वे
शिष्यैराज्ञागृहीता परमसुखयुता यैरिहामुत्र लोके ॥ १० ॥
एकेद्युर्गुरुरामदासभवनं श्रीचन्द्र आगत्य भो-
स्तं पप्रच्छ किमर्थमेमं मुखकूर्चं विवर्धितं सद्धृतम् ।
तेनोक्तं भवदीयपादयुगलप्रोञ्छाय मे कूर्चकं
तच्छ्रुत्वा कथितं प्रसिद्धपदवी प्राप्ता त्वयेदृक्तया ॥ ११ ॥

अर्जुनो वदति स्माहं, गुरुग्रन्थनकारकः ।
वाणीं रचित्वा मधुरां, कबीराय निवेदये ॥ १२ ॥
आश्चर्यं दृढमीदृगाम सकलं दृष्टं मया सज्जना
दग्धो भ्रान्तिवशेन नीरलुठनं कुर्वन्ति भ्रान्ता जनाः ।
अङ्कुरं हरितं चरत्यहह रात्रं गर्दभः सङ्कुलन्
मत्तो माहिषकोऽप्रयोजनतया कूर्दन्भवो याति च ॥ १३ ॥
आवेयी पिबति स्वयं ह्यविसुतं सम्भ्रान्तलीलायुतं
कामार्त्ताः खलु बुद्धयो विमुखता देहात्मनिष्ठां गताः ।
दुःखानित्यकपूयकात्मरहितं देहादिकं भ्रान्तितो
सौख्यं नित्यपवित्रमात्मनियतं जानन्त्यबुद्धया हताः ॥ १४ ।
गुरुप्रसादतो मया समस्तवाग्विचारिता
भजन् गृणन् हरिं सदा कलौ कृतार्थतामियात् ॥ १५ ॥
श्रीनारायणभजनं कुर्वन् श्वपचोऽपि निष्कपटः ।
नयहुतितपःसमाधिजफलं कबीरो हि समलभत ॥ १६ ॥

इति श्रीकृष्णकौरमिश्रविरचिते ग्रन्थे श्रीबाबानानकाङ्गद-
अमरदासरामदासार्जनगुणगणमाहात्म्यकथनं नाम
सर्ग एकादशः समाप्तः ॥ ११ ॥

——:o:——

## द्वादशः सर्गः ।

### हरिगोविन्दहरिरायहरिकृष्णगुणगणमाहात्म्यकथनम् ।

षष्ठो हरिगोविन्दो राजति गुर्वासने तिष्ठन् ।
तत्पार्श्वे मान्त्रिजनो म्लेच्छपतेरेकदा प्राप्तः ॥ १ ॥
कार्यव्यग्रतया तं नादृतवान् स्वेच्छया गुरुः प्रकटः ।
स क्रुद्धो विमतिरयं चिन्तितवान् हन्मि खड्गतश्चैनम् ॥ २ ॥

ज्ञात्वा तेन स चोक्तो रणविमुखेनेह किं क्रियते ।
भवता बहिर्मुखेन पापजनाचरितमाचारि ॥ ३ ॥
मन्त्री नत्वोवाच क्षम्यं मम कर्म दुरिताढ्यम् ।
तन्नमनं च विलोक्य प्रोचे सन्मार्गमुपदिष्टम् ॥ ४ ॥
हरिरायो जनस्वामी विदितः सप्तमासने ।
तद्गेहं बाहुजः कश्चिन्मृतपुत्रः समागतः ॥ ५ ॥
तं दुःखिनं गुरुः प्रोचे भज त्वं परमेश्वरम् ।
सर्वदुःखविनाशाय परलोकाभयाय च ॥ ६ ॥
तेनोक्तं मम भवने पञ्चजनाः सन्ति मत्पाल्याः ।
पुत्रद्वयं च कन्या नारी भृत्यश्च धनहीनाः ॥ ७ ॥
विधिरेव ददाति नापरो गुरुणोक्तं न हि मन्यते स्म सः ।
मम पत्रमिदं मदीयशिष्येऽर्पय योग्यं गुरुरित्युदैरयत ॥ ८ ॥
पत्रीमध्ये लिलेख प्रवरतरगुरुः प्रत्रिका वाचयित्वा
बध्वैनं रक्ष गेहे सुखिनमुपगतं मञ्चकादीन् सुमृष्टम् ।
षण्मासान्ते पुनर्वै मम निकटमुपायात्विहेत्थं कृपालु-
स्तत्पत्रीं वाचयित्वा तदनुकृतामिदं गुर्वनुज्ञानुसारम् ॥ ९ ॥
तत्रस्थः सोऽप्यवादीन्मम गृहे मनुजा मद्विहीना म्रियेरन्
श्रुत्वाप्येवं तमेनं न हि गुरुवचनान्मोचयामासुरेते ।
तत्पुत्राश्चैकवारं ह्युपवसनगतास्तत्समीपस्थलोकैः
श्रुत्वा ज्ञात्वा च वार्तां स्वगृहत उरुपात्राणि गोधूमचूर्णैः ॥१०॥
पूर्त्वा दत्तानि तेभ्यो बहुभुजिरुचिता तद्दिनेऽभूत्तदीया
तैः पुत्रावेकहट्टे वणिज उपसमासादितौ कृत्ययुक्तौ ।
सूचीकृत्ये नियुक्ता बहुनिपुणमतिः कन्यका तस्य लोकै-
स्तन्निर्वाहस्तु सम्यक् स्म चलति स जनः षष्ठमासान्त आयात्॥११॥

दृष्ट्वा यात्रानिरूढिं प्रणतिमुपगतः श्रीगुरोरग्रतश्च
प्रोक्तं तेनास्मि तीर्णो निरयगणभयं मन्प्रभावाद् गुरूणाम् ।
नित्यं तत्सेवनाद्वा नियतमुपसृतः पापहीनः कृतार्थो
योगक्षेमश्च तेषां स्वयमिव भवति प्रार्थना चिन्तयो नः ॥१२॥
अष्टामतस्थहरिकृष्ण उदारबुद्धिः
सर्वस्य सेवकजनस्य कृतार्थकारी ।
हिन्दुस्थलाधिपतिनाधिकृतो हि मन्त्री
पृष्टोऽधुनास्य हरिरायवरस्य लोके ॥ १३ ॥
कुत्र स्थितिः स मृत इत्यवदत् स मन्त्री
तस्याज्ञयाधिकृत एव स समवर्षः ।
राज्ये स्थितश्च हरिकृष्ण इति प्रथावान्
सत्याधिपः सकललोकजनप्रसिद्धः ॥ १४ ॥

॥ युग्मम् ॥

प्रोवाच मन्त्रिणमहं स्वयमेव गत्वा
पश्यामि शक्तिमपि तस्य जनप्रसिद्धाम् ।
क्षात्रेण मन्त्रिप्रवरेण स ईश उक्तो
गत्वाहमानय इहैव विलोकयस्व ॥ १५ ॥
श्रीमान् स मन्त्री रथघोटकोष्ट्रान्
संगृह्य सेनासमुदाययुक्तः ।
गत्वा गृहं तस्य ननाम वार्त्तां
तां श्रावयामास रहस्यथोच्चैः ॥ १६ ॥

इति श्रीकृष्णकौरामिश्राविरचिते ग्रन्थे हरिगोविन्दहरिराय-
हरिकृष्णगुणगणमाहात्म्यकथनं नाम
द्वादशः सर्गः समाप्तः ॥ १२ ॥

——:०:——

# त्रयोदशः सर्गः ।

## हरिकृष्णतेगबहादरगुणगणवर्णनम् ।

दिल्लीपुरिं तत्पतिमीक्षयेयं
तं देशमाप्येति जगाद हृष्टः ।
मात्रा समेतः शिविकां रुरोह
दिल्लीं प्रविष्टः कतिभिर्दिनैश्च ॥ १ ॥

तद्द्वारं किं निविष्टः स च मनसि तया पूर्वसन्तर्कितश्च
साङ्कारूढं च दृष्ट्वा मननविनतिभिर्द्रव्यपूरैरनन्तैः ।
पूजां चक्रे प्रसन्ना स च वसति गृहे तत्प्रसादाभिलाषी
किञ्चित्काले व्यतीते रुगवसितशरीरोऽतिखिन्नः स लोके ॥ २ ॥

शिष्यैः सर्वैर्मिलित्वा कथितमिति गुरो देहरक्षा च कार्या
लोके वार्ता निलोक्या जगति हितकरी संस्थितिः सज्जनानाम् ।
तैरुक्तं म्लेच्छलोको न हि न हि नयनैर्गोचरीकार्य एव
चक्षुः सम्मील्य गम्यं वपुरिह सततं शीतलाछन्नहेयम् ॥ ३ ॥

भूयः पृष्टं च शिष्यैर्वयमिह शरणं कस्य यामः समस्ता
उद्धारो येन नः स्याज्जगति समुदितं तेन वा बाबकाले ।
ग्रामे स्थायीभवत्सुप्रकटितमहिमः शीघ्रमाविर्भविष्यन्
गत्वा लोके परीक्ष्यं वदति गुरुरिति स्तब्धमुष्टिं स्म कुर्वन् ॥४॥

मन्त्री प्रोचे दिलीशो यदि वदति तदा किं तदग्रे प्रवाच्यं
तद् ज्ञात्वोद्धर्तुकामः सकलजनहितो रागहीनं जगाद ।
आदौ सेवी गुरूणां शमदमनिरतः श्रद्धितो वै तितिक्षु-
र्वैराग्यं बोधयुक्तं दधदुपरतवान् वेदशीर्षाधिकारी ॥ ५ ॥

पद्माधानर्घ्यवासो मणिगणकनकप्रावृतौ शोभनं किं
किं भुक्तौ मांसमेदोघृतगुडमधुराभाज्यसच्छष्कुलीनाम् ।

किं रत्या कोमलानां मृदुमधुररवाहूतचित्ताङ्गनानां
सौख्यं स्वात्मानुरागाद्धृदयगतपरानन्दभोगे जनानाम् ॥ ६ ॥
किं रत्या नवनीतकोमलवपुः श्यामाङ्गनानां सुखं
हर्म्यश्वाश्वतरीरथोष्ट्रकलभारोहोद्भवं किं सुखम् ।
किं सेनासमुदायशोभितमहाराज्याधिकारस्थिता-
वेकं तद्भजने मनो यदि लगेत् मा सर्वलब्धिर्जनौ ॥ ७ ॥
इत्थं वाक्यं श्रुतीनां परमगुरुतरं मातुरङ्के निषण्ण
उच्चैरुच्चारयन् सन् विलयमुपगतः प्राणवृत्त्या विहीनः ।
माता तद्वाक्यविज्ञा हृदयगतमहामोहजाला विशोका
किञ्चिच्छोकाकुला सद्वपुरुचितजनैर्दाहयामास काष्ठैः ॥ ८ ॥
गङ्गायामस्थिजालं धनवमनयुतं प्रेषयित्वा चचाल
स्वं देशं शिष्ययुक्ता हरिभजनपरा तत्प्रविष्टा गृहं स्वम् ।
लोकैरागम्य पृष्टाकथयत गुरुवार्ता बकाले तन्मृत्युं
शुश्रुवान्यः सकलजनगणः सोऽपि हा हा चकार॥ ९ ॥
नवममहलवार्ता यैः श्रुता तेऽपि सर्वे
गुरुजनलभनार्थं प्रोद्यता बाह्यवृत्त्या ।
अलभत सकलः सोढीजनो नैव वार्ता
गुरुपदविमुखैः किं तत्पदं लभ्यते भोः ॥ १० ॥
गत्वा सर्वे बकालं शयनतलकृतावुद्यताः षोडशाधि
प्रोचुस्ते गर्वयुक्ता वयमिह गुरवोऽन्योन्यमीर्ष्यालवाढ्याः ।
तद्ग्रामे तेगबाहादर इति विदितो नानकीमातृसूनुः
स्थाता कोष्ठे च कासिन्नविदितमहिमो लोकसङ्गेऽनपेक्षः ॥११॥
शिष्यैः सर्वैर्मिलित्वा गुरुलभनपरैर्ग्रन्थजीवाक्यनिष्ठैः
प्रोक्तं ग्रन्थैकविज्ञाः कथयत गुरुनामास्मदीयं विलोक्य ।

ग्रन्थस्यार्ता: पठित्वा कथितमिति च तेगाभिधा श्रीगुरूणां
पृष्टा माता जनैः सा वदति मम सुतः स्मैष तेगाभिधानः ॥१२॥
स्वादे पाने विरक्तोऽवधुतजनसखो निस्पृहो वै तपस्वी
लोकैरुक्तं तदेवास्मदपचितिहरो ह्येष योग्यो गुरुर्नः ।
अन्धे कोष्ठे स्थितस्यावगमपररतस्य स्वरूपस्य विष्णोः
साक्षात्कारैकरक्ताः परमसुखयुतास्तस्य दृष्ट्वा जनास्ते ॥ १३ ॥
मात्रा गत्वा समीपं गदितमिति शृणुष्वाश्वलं ते जनान् वै
सम्यक् सो प्राहितं श्रीमहितहरिकृष्णेनावितव्यान् सुशिष्यान् ।
तस्मात् सिंहासनस्थः सकलजनहितः पालयस्व स्वकीर्ति
मर्यादापालनं सज्जनसहजगतीरक्षणं यत्स्वकानाम् ॥ १४ ॥
प्रोचे स्वां मातरं धूर्वहनमतिदुरन्तं न शक्यं विरक्तै-
र्मादृग्भिर्निःस्पृहां तैर्जनसकलमनोरञ्जनं कर्मभिः कैः ।
सर्वैः शिष्यैरथोक्तं जनहितकरणं सज्जनानां हि धर्मः
शेषः पृथ्वी बिभर्ति क्लमयति किमु किं पीडमानो विभाति ॥१५॥
पूर्णेन्दुर्सिंहिकाघनैः परिवृतो नो वीक्षते किं भुवि
श्रुत्वैवं जनसङ्कथां स्वमनसा सम्मत्य संस्नाय च ।
दिव्यं वस्त्रयुगं विधाय नमयन् श्रीमातृकापादुका-
मारूढः परमासनं जननुतः पुष्पैश्च दिव्यैर्वृतः ॥ १६ ॥

युग्मम्

इति श्रीकृष्णकौरमिश्रविरचिते श्रयङ्कमहाकाव्ये
हरिकृष्णतेगबहादरगुणगणवर्णनं नाम
त्रयोदशः सर्गः समाप्तः ॥ १३ ॥

——:o:——

# चतुर्दशः सर्गः ।

## नेगबहादुरगोविन्दसिंहगुरुगणवर्णनम् ।

शिष्योऽभून्मध्यणाख्यो गुरुजनभजनरतो ज्ञानिशस्तो लवाणा
आयातः स्वीयगेहाद्बहुवसुपु वरं रौप्यमुद्रासहस्रः ।
भूत्वार्थं श्रीगुरूणां विनत इह ततः षोडशासीनशय्या-
द्वे मुद्रोपायनेन प्रतिशयनमुपायन्पुनस्तेगबाहम् ॥ १ ॥
तत्रापीत्थं सुपूजाबलिददनपरस्तेन वाचा प्रयुक्तो
मत्साहस्रैकमुद्रा किमु धरसि नहि प्रान्ततः किं दिदृक्षुः ।
तेन ज्ञातो गुरुस्त्वं जगति सुविदितस्त्वन्यगाभावकश्च
नेगो बाहादराख्यो विरतिपर उदारो महान् दानशाली ॥ २ ॥
पश्चाच्छ्रीतेगबाहादर उपवनगश्चागलावाख्यदेशे
खिन्नो वै दूरयानाद्बहुतृषिततया पीडितोऽतिक्षुधार्त्तः ।
संगृह्याखेटवृत्तिं बहुभ्रमणरतः कश्चिदत्रागतं च
दत्त्वा सौवर्णमुद्रामभिलपति जनं मिष्टमन्नादिकं स ॥ ३ ॥
प्रेक्षाकर्त्रा च केन भ्रमणपरवशेनात्त इत्थं स पृष्टः
कस्मान्मुद्रा गृहीता क्व च वसति सना तेन संदर्शितः सः ।
आत्तः कोटाधिपेन क्रमत इह तुरङ्गाख्यशाहं समेतो
बन्द्यां दत्तः स तेनासुखित इह चतुर्भिः स्वशिष्यैरुपेतः ॥ ४ ॥
शिष्यत्रय्या स उक्तो वयमिह गलितास्तान् पुनः प्रत्युवाच
भोः सर्वे बन्धहीना मम वचनबलाद्गच्छत स्वं समाजम् ।
तुर्येणोक्तं सदेहोऽहमुपगमनभाक् श्रीमतां सद्गुरूणां
कश्चित्कालं विलम्ब्याकथयदिति पुनः खड्गतो मां जहि त्वम् ॥५॥
देहं मे शीर्षहीनं कुरु मम वचनान्नैव ते पापलेशो
म्लेच्छैर्मद्धर्महानि क्रियत इति मया देहहानिस्तु कार्या ।

नो चेत्ते पापयोगोऽस्मिन्निति गुरुकथनात्तेन तत्सत्कृतं
अन्वेन्धं बादशाहो मनसि धिगिति यत्प्रोक्तवान्मां दुरीहम् ॥६॥
अन्वा तन्मृत्युवार्त्तामकथयत गुरुः कश्चिदप्यत्र यातु
शीर्ष देहं छलेनानयतु मम हित जायते तत्कृतं हि ।
अन्वा चाण्डाल एकः पुरमगमदहो पातशाहस्य तस्य
गन्त्रीं घासेन पूर्णां पटनमुपगतस्तां च विक्रेतुकामः ॥ ७ ॥
घासे निक्षिप्तशीर्षोऽविदित उपगतो माधवालं निवासं
दृष्टो गोविन्दसिंहः सुत इति कथितो रंघडेटोऽस्मदीयः ।
तद्दग्ध्वा तत्स्थलं सोऽरचयत पुनराश्वेव शिष्यैश्च देहो
दिल्लीं प्राप्तश्च दग्धो रचितवरतलः पूजितः सर्वलोकैः ॥ ८ ॥
शोकार्त्तो वाक्प्रबन्धं व्यरचत समुपालम्भजालं विलिख्य
पत्रे राजानमुर्व्याः प्रतिप्रहितनरस्तत्करे दत्तपत्रः ।
प्रायात्स्वीयालयं सोऽकथयत पुरुषैः शीघ्रता बद्धकारि
भाव्यं यत्खालसं वै शतशरदपरं प्रोदपादि स्वकामात् ॥ ९ ॥
लोकैर्यत्पीडनीयं तादिह सुजनितं सोऽपि सम्प्राप्तदुःखो
हूत्वा विप्रं महर्षिं तदनुगुणतया कालिकाराधनोत्कः ।
केशान् धृत्वा धृतासिर्जपहवनरतः शीघ्रताव्यस्तचेष्टः
खड्गं दृष्ट्वोत्थितः सन्मनसिगतमहाहिंसया नष्टशत्रुः ॥ १० ॥
यद्राज्ञः पार्वतीयान् प्रति लिखितमिदं देशराजेन देशात्
सोऽयं निस्सारणीयः प्रहितपृतनया मेलयित्वा भवद्भिः ।
एवं ते सत्क्रियार्हो निजमरणभयात् क्षिप्त एवच्छलेन
प्रायान्मंचाधिरूढः स्थलवसतिमसौ मौलवीरूपधारी ॥ ११ ॥
तेनाश्वानां च घासादिकमपि नियतं पेयमन्नादिकं च
रुद्धं विद्राविता साधनभरिततरिः पूरमध्ये च नद्याः ।

पश्चाद्दक्षाशिकायां भुजगपुरगतः शिष्यलोकैर्नतश्च
तत्रैव न्यक्तदेहो बहुसमयगते प्राप्तसन्मात्रमूर्तिः ॥ १२ ॥
पश्चात् पञ्चाम्बुमध्ये त्रिदिनगुणगणः खालसा प्रादुरासी-
त्तस्यैवेच्छावशेन प्रतिदिनहननं म्लेच्छजातेः प्रजानाम् ।
देशानां लुण्ठनं वै समजनि हिमिनंदादिकानां बलेन
लोकैराभाणि किञ्चित्स्खलितपदगतिः खालसो वर्त्यतीह ॥१३॥
ब्रह्मण्यः सत्यसंधः प्रतिदिनममराणां भुवः पूजनोत्कः
काश्यां गन्तुर्महर्षेर्नियतविधिहर्ता क्रोधविच्छिन्नबुद्धेः ।
सम्मानार्थं नमामस्म वदति च गुरौ नैव रोषो विधेयो
जानीत प्राप्तमेवाशनवमनधनं तद्ददौ सर्वदेयम् ॥ १४ ॥
सर्वं क्षत्रं सराज्यं ससुतधनसुखं युष्मदीयप्रसादात्
सम्पन्नं शत्रुहीनं गजरथसदनाढ्यं यशस्विप्रगल्भम् ।
देवा मन्त्राश्च सर्वे भजनविधिवशा विप्रसन्दर्शिताध्वा
नो चेत् क्रुद्धा भवेयुर्मतिहननपरा वैदिकीयुक्तिरेषा ॥ १५ ॥
सङ्कल्पो युष्मदीयः फलति बत मया ज्ञातमित्थं सदैव
भूयो भक्तिर्मदीये मनसि निवसतां श्रद्धया युष्मदीया ।
श्रीमद्गोविन्दसिंहैरिति मनसि कृतं रामदासे पुरे त-
ज्ज्ञातो वासो द्विजानां प्रवरसुखयुतां विद्ययालंकृतानाम् ॥१६॥

इति श्रीकृष्णकौरमिश्रकृते श्रथकू महाकाव्ये
तेगबाहादरगोविन्दसिंहगुणगणवर्णनं नाम
सर्गश्चतुर्दशः समाप्तः ॥ १४ ॥

———:o:———

# पञ्चदशः सर्गः ।

## श्रीगुरुगोविन्दाभिलाषितामृतसरसि पण्डितब्राह्मणावासवर्णनं ।

अमृतसरसि वासिनो द्विजाग्र्या
हरिनारायणतो निरूपिताः ।
लवपुरत इहागताः स्थिता ये
विबुधा ज्योतिषवैद्यकाप्तशोभाः ॥ १ ॥

चम्पाकृष्णौ हरिभजनको मित्रसेनादिकास्ते
माणाजस्साद्विजजनवरा वंशमध्ये तिवारी ।
श्रीमन्नारायण इति हरिः शब्द एवाऽस्तिपूर्वं
यस्याभिख्या जगति मधुरज्ञातिरेव प्रसिद्धाः ॥ २ ॥

श्रीशा भान्ति जयादिसिंहगुरवो यत्कीर्त्तनान्मादृश
आनन्दं भजते प्रभुः प्रभवतां दौहित्रपुत्रः सुखी ।
यत्सेवानिरतैः पुमर्थमखिलं लभ्यं शुभा बुद्धयः
काव्यालंकृतितर्कवेदशिरसां व्याख्याविहारेषुपाः ॥ ३ ॥

हीरानन्दो विभाति प्रथितगुणगणो विद्यया भूषिताङ्गो
गोपीकाशीव्रजेशक्षितिरघुसुजयो नाथयुक्ताः समस्ताः ।
पुत्राः पौत्रा इमे यस्य विदितमहिमा दीर्घजीवित्वयुक्ताः
सोऽयं भाष्यान्तविद्यापठनवितरणे वाक्यतिर्जीवताद्वै ॥ ४ ॥

चिरञ्जीवी भाति प्रथितमहिमो भूषणशिव-
पुरो रामौ भातो जगति विदिते शस्त्र य इमे ।
सुता यस्या भान्तीशनयनतयार्केन्दुशुचिषो
यथा विद्याशोभाकमलवसनावान् स जयतु ॥ ५ ॥

वंशीधरो जगति भातु महानुभावो
मिश्रः शजाद इति यस्य सुता सुतश्च ।
विद्वान् भवन् सुतयुतः सुतदीर्घजीवी
वाणीः मुखे जलधिजा भवने च यस्य ॥ ६ ॥

रामो भाति सवायपूर्वक इह श्रीविद्वदग्रेसरो
ज्योतिर्विद्गणितै महामतिरसौ साहित्यहोराप्रवित् ।
काव्यालंकृतितर्कशाब्दनिपुणः श्रीलक्ष्मणेनान्वितो
भार्यापुत्रयुजा महेशकृपया लक्ष्म्या कुबेरोपमः ॥ ७ ॥

ज्योतिः शास्त्रविचारसारनिपुणो लक्ष्म्यालयो बुद्धिभाक्
भाति श्रीगणपप्रसादजनितानन्दो गणेशाभिधः ।
दौहित्रेण सदा सुखी शिवमहेलावाप्तसूनुर्भवे-
द्विप्राशीर्गणमण्डितांकहृदयः स्वच्छो महेच्छोदयी ॥ ८ ॥

यस्य वाक्सरसि भाति शारदा
सङ्गतो जयति राययोजितः ।
तत्सुतौ शिवदयालुनाथकौ
ज्योतिषो विधिवरस्य मेलकौ ॥ ९ ॥

जस्सामिश्रो ज्योतिषाग्रेसरो यः
पुत्रैः पौत्रैः संयुतः श्रीधनाढ्यः ।
शुक्रो जीवो बोधनो दूरदृष्ट्या
लोकैः पूज्यत्वान्मतेः सूक्ष्मतायाः ॥ १० ॥

श्रीकण्ठः शिव एव पण्डितवरः सत्पुत्रपौत्रान्वितो
वैराग्याच्च शमादिसाधनरतो लोकेषु मिथ्यादृशिः ।
भाति श्रीरमणेशब्रह्मसदृशो मुद्रां मनोनिग्रहे
युञ्जानो हरिचिन्तने सुललितां प्रत्यूहविध्वंसिनीम्-॥ ११ ॥

रामान्तो मनसादिनाथमहितो ज्वालादिरानन्दकः
पौत्रः पुत्र इति क्षितिप्रभुवरौ राजाभिमान्यौ शुभौ ।
यस्य स्वर्प्पतिजतुरन्वयधरौ सत्पुत्रपौत्रान्वितौ
शास्त्रश्रौतविचारभूषितमती वाणी रमामण्डितौ ॥ १२ ॥
सिंहः सुलतानपूर्व्वः प्रथितगुणयशा विद्यया भूषिताङ्गो
दाने माने सतां वै व्यवहृतिनिपुणः सत्समाजे विभाति ।
राजन्यानां सुपूज्यः सुतधनमहिला शोभितो मातृभक्तो
भैषज्ये पारसीके प्रचुरमतियुतः शस्त्रशास्त्रे प्रवीणः ॥ १३ ॥
साई दासोबभूवेन्द्रियजितिविदितस्तस्य सूनुर्शिवादि-
र्दत्तान्तो राययुक्तः क्षितिविदितगुणस्तस्य सूनुर्द्वयं च ।
विद्याचातुर्यशाली लवपुरवसतिः सन्महादेवनामा
शोभारामो द्वितीयो ग्रहगणितविधौ सूर्यसिद्धान्तवेत्ता ॥१४॥
एकः पुत्रोऽस्ति कृष्णः कवरपदयुतः श्रीमहादेवनाम्नः
पुत्रैः पौत्रैः प्रपौत्रैः प्रवरगुणगणैः संयुतो भाति लोके ।
कृष्णो विष्णुः सहायाव सति पदयुतश्चाश्विनाभावुभौ स्तः
शोभारामस्य सूनू जगति गुणगणौ सर्वविद्याप्रवीणौ ॥ १५ ॥
श्रीदेव्या हृत्स्थया वै प्रहितमतिमना कृष्णकौरो द्विजोऽहं
व्याख्याचातुर्य्यशाली ह्यमृतसरसिगं काव्यमेतत्करोमि ।
यस्मिन्नीशावतारा दश कलिविदिता वर्णिताः स्वीयबुद्ध्या
श्रीगोविन्दस्य सिंहस्य गुणगणयशो गातुकामः प्रवृत्तः॥१६॥

इति श्रीमिश्रकृष्णकौराविरचिते श्रयङ्के महाकाव्ये
श्रीगुरुगोविन्दाभिलाषितामृतसरसि पण्डित-
ब्राह्मणवासवर्णनं नाम पञ्चदशः
सर्गः समाप्तः ॥ १५ ॥

# शोडशः सर्गः ।

## श्रीबाबानानकवर्णनपुरःसरं मङ्गलप्रार्थनम् ।

श्रीबाबानानकस्य प्रथमवयसतो मोक्षवार्त्तारतस्य
श्रीमद्गोविन्दसिंहस्य वचनविदिता मोक्षवार्त्ता प्रवृत्ता ।
वासिष्ठोक्तप्रबन्धैरमृतममरसि ये निर्मलाः साधुवादा-
स्तेषामिष्टा प्रवृत्तिस्तदनु जगति वै भाषया सुप्रणीता ॥ १ ॥
लवपुरवासी विद्वान् महान् कृपाराम इति विदितः
प्रतिदिनवासिष्ठकथागृहमध्ये वाच्यते तैस्तु ॥ २ ॥
तच्छ्रोतॄणां प्रशस्तो भुजजनिविदितस्तेषु षष्ठा प्रतिष्ठो
नाम्ना दीवानचन्दः प्रथितसदवनिस्तेन वासिष्ठभाषा ।
भूमौ संलिख्य बद्धा प्रतिदिनमवला शूद्रसाधुप्रतीना
ब्रह्मा द्वैतैकनिष्ठा वदनपरवशाः सर्व एव प्रवृत्ताः ॥ ३ ॥
तस्माद्ब्रह्मविचार एव सफलो योऽशीतिकृच्छ्रप्रदः
श्रद्धापूर्वकशान्तिदान्तिनिरतैर्यच्छ्रोत्रिभिः प्राप्यते ।
भक्त्या चित्तवशेन हूत इव य स्फूर्त्तो भवेन्मानसे
तद्ब्रह्माहमजन्निरञ्जनवपुः शुद्धं पवित्रं परम् ॥ ४ ॥
भक्तोद्धारणदक्षमार्त्तिहरणं जिज्ञासिनां ज्ञानद-
मर्थिभ्योऽर्थदमात्मरूपमनघं यत् ज्ञानिनां नित्यदा ।
श्रीकृष्णादिकविग्रहं धरति यद्गोविप्रभूम्यार्थितं
सर्वेषामभिवांच्छितं स्वहृदये ब्रह्माद्वयं नौम्यहम् ॥ ५ ॥
मायातीतं परं यद्बहुभवनतयानेकरूपो विभाति
पूर्वं ब्रह्मा च विष्णुः शिव इति जगदुत्पत्तिरक्षादिकारी ।
जाग्रत्स्वप्नं सुषुप्तिः प्रकटितविभवः सर्वसाक्षीः निराशीः
सच्चितसौख्यस्वरूपो बृहदुपनिषदां सारभूतो विभाति ॥ ६ ॥

तस्यैव लीलया माऽयं वैत्तप्रकटितविभवः स्वेच्छया रामर्मूत्ति-
र्भूत्वा वैराग्ययुक्तः शमदमनिरतः श्रीगुरुं पृच्छति स ।
द्वात्रिंशच्छ्लोकमघं प्रकरणगुरुकं श्रीवासिष्ठोऽब्रवीत्त्व
श्रीमद्गङ्गाधरेन्द्रैरतिविवृतममुं सर्वलोकाः पिबन्ति ॥ ७ ॥
सर्वोद्धारैकदक्षः कलियुगसमये नानको ग्रंथकारी
यच्छ्रुत्वा धर्मपूर्वं लभति फलगणं किं पुनश्चाभ्यसन्वै ।
बुद्धावेतद्विचार्याहमपि लघुमतिस्तस्य खक्ष्मावतारान्
पट्क्षित्यध्यायरूपाद्विवरणमिषतो बुद्धिशुद्धिं करोमि ॥ ८ ॥
श्रीमद्विद्याप्रशस्ता सकलजनहिता षोडशी हेतुभूता
ब्रह्मादिस्थावरान्तप्रतततनुगणे प्राणशक्तिर्विभाति ।
सर्गैः श्लोकैः षोडशैः पदकलनयुतैः सर्गसर्गे च तद्वत्
तेनेयं काव्यरूपा जगति जनहिता भाति देवी भवानी ॥ ९ ॥
संवित्स्वानन्दरूपा दुरितभयहरी बुद्धिसम्पद्विधात्री
ब्रह्माद्यैर्वन्द्यमाना गणपगुहरता विघ्नराशीन् विहन्त्री ।
अंतर्बाह्ये विविक्ता भजनरतजनान् मोचयित्री भुजगत्तः
सेयं माता त्रिलोक्या जपनविधिनता भक्तमांगल्यकर्त्री ॥१०॥
कूटत्रयी षोडशवर्णरूपा नानामनूनां जननी प्रकाशिका ।
श्यामादिबालादितनूधराया सा देवता मङ्गलदा प्रभूयात् ॥११॥
ब्रह्माद्या यस्य तेजः सहनविधिपरा नैव शेकुः प्रसोढुं
मूषारूढं बलाढ्यं मितरहितपरानन्तशक्तिं भवान्याः ।
शम्भोश्चानन्दपात्रं जनहितकरणं नाम संस्मृत्युपायात्
विघ्नानां राशिनाशे परमुभयतले धर्मकामान्ददानम् ॥ १२ ॥
विघ्नान्हन्त्वेकदन्तो विकटइभमुखो धूम्रकेतुर्गणेशो
भाले चन्द्रश्च लम्बोदर उत विकटः सुन्दरास्यो विनेता ।

नामान्योनानि पवित्राणि गिरिति कथयन्द्वादशेन्थं प्रयाणे
विद्यारम्भे विवाहे सकलशुभविधौ मङ्गलं प्राप्नुवीत ॥ १३ ॥
आर्द्रा श्रीनानकाख्यो रचितदशवपुर्लोकमुद्धर्तुकामः
पश्चाच्छ्रीखालसोऽयं जनजनहृदये सम्प्रवृत्तो हठेन ।
भूमौ स्वीयान् सुसक्तान् धनभवनमहाराज्ययुक्तान् प्रकुर्वन्
वैशेष्यात् सौधयुक्ते सरसि विलसति ध्वंसयन् विघ्नपूगान् ॥१४॥
आप्रातश्चानिशीथं भजनपठनकं रागमार्गं वितन्वं-
स्तुम्बीवीणामृदङ्गध्वनिविलयततं वृद्धिमन्मज्जनेषु ।
श्रोतृश्रोत्रप्रवाहेऽमृतरसवितति चारयन् भाति लोके
सोऽयं कल्याणकारी जनहितकरणं साधु भूयात् पृथिव्याम् ॥१५॥
शन्नो मित्रोऽर्यमा शं भवतु च वरुणः शं न इन्द्रो गुरुः शं
विष्णुः शं नस्त्रिपाद्भिस्त्रिभुवनमुरुधा क्रान्तवान् सं विधाता ।
नीचैरूर्ध्वं च वामे शमु भवतु बहिर्दक्षिणेऽन्तःशरीरे
देवी बाला भवानी शमवहितगतिः श्रीकरा साधकानाम् ॥१६॥

इति श्रीमिश्रकृष्णकौरविरचिते श्रद्धङ्क महाकाव्ये
श्रीबावानानकवर्णनपुरःसरं मङ्गलप्रार्थनं
नाम षोडशः सर्गः समाप्तः ॥ १६ ॥

॥ शुभमस्तु ॥

———:०:———

अष्टेष्वष्टैकवर्षे भृगुशिवसहिते ज्येष्ठशुक्ले निशायां
ग्रन्थः श्रीयुक्त एष प्रथितगुणगणो लिख्यते पूरयित्वा ।
कौरेण ब्राह्मणेन त्रिपुरजननिपादाग्र एवोपनीतः
पूजावल्यर्थमाला त्वभिमतफलदो मङ्गलश्रीविधाता ॥ १ ॥

———:०:———

# नाम सूची

# Our Publications and Their Price

| | | |
|---|---|---|
| १. | अथर्ववेदीय-पञ्चपटलिका | १॥) |
| २ | ऋग्वेद पर व्याख्यान | १।) |
| ३. | जैमिनीयोपनिषद्ब्राह्मणम् | २॥) |
| ४ | दन्त्योष्ठविधिः | ॥) |
| ५ | मण्डूकी शिक्षा | १) |
| ६. | अथर्व-बृहत्सर्वानुक्रमणी | ४) |
| ७. | वाल्मीकि-बालकाण्डम् | ५) |
| ८. | „ -अयोध्याकाण्डम् | ७॥) |
| ९. | „ -आरण्यकाण्डम् | ७॥) |
| १०. | वैदिक-कोषः | १२) |
| ११. | काठक-गृह्यसूत्रम् | ७) |
| १२ | वैदिक वाङ्मय का इतिहास (दो भाग) | १०) |
| १३. | चारायणीयमन्त्रार्षाध्यायः | १) |
| १४ | ऋग्वेद-भाष्यम्—उद्गीथाचार्यकृतम् | ३) |
| १५. | विशाल-भारत | ३) |
| १६. | संस्कृत साहित्य का इतिहास | ३) |

*Apply for your copies to:—*

The Manager, Book Depot,

D. A.-V. College Research Dept, LAHORE. (India